# श्रीमद्वाल्मीकिरामायणम्

## सरलगद्यात्मकम्

अरण्यकाण्डम्

किष्किन्धाकाण्डम्

कालूरि हनुमन्तरावः

# श्रीमद्वाल्मीकिरामायणम्

## सरलगद्यात्मकम्

## अरण्यकाण्डम्, किष्किन्धाकाण्डम्

SANSKRIT
by
**Kaluri Hanumantha Rao**

First Edition 1997

Copies : 750



**Price : Rs 60/-**

This book is printed with the financial assistance of
Shri Tirumala Tirupathi Devasthanams under their scheme -
'Aid to publish religious books'

For Copies : K. Hanumantha Rao
20, OUT Colony, Sainikpuri
Secunderabad - 500 094
Phone : 7113696

Composed &
Printed by : Fontline Graphics
Baglingampally
Hyderabad - 44
Phone : 7660000

# प्रस्तावना

किमर्थोऽयं गद्यरामायणरचनासंरम्भः? इदं समाधीयते। यद्यपि रामायणकथा सर्वज्ञाता रामायणकाव्यं सर्वपाठकविदितं च तथापि अतिपरिचयादवज्ञा सर्वत्र बोभवीति। परस्परं भिद्यमाना रामकथा बह्व्यः सन्ति तथा वाल्मीकीयस्य रामायणस्य च वैविध्यं विद्यते। तादृश्यामवस्थायां वटोदरनगरस्थया प्राच्यपरिशोधनसंस्थया संस्कृतवाङ्मयस्य सुमहती सेवा कृता यया बहुतालपत्रग्रन्थपरिशीलनेन संशोधितप्रकाशनं (critical edition) निर्मितम्। प्रधानतयेदं प्रकाशनमनुसृत्य सरलगद्यरामायणमिदं विरचितमस्ति। एवं विरचयता मया इमे नियमा अनुसृताः।

१. काव्यस्य प्रतिश्लोकं सरलगद्यीकरणयत्नः कृतः।

२. मूले अविद्यमानं न किमपि संयोजितम्।

३. मूलस्थितानि सम्बोधनानि विशेषणानि च स्वल्पीकृतानि।

४. यत्र मूलं ममाभिप्रायेण पाठपरिवर्तनमपेक्षते तत्र+चिह्नं स्थापयित्वा बृहन्मूलग्रन्थस्याधःसूचिकातः पाठान्तरं गृहीतम्।* Cr प्रकाशनात् त्याज्यः पाठः cr इति, तत्स्थाने cr अधःसूचिकातो ग्राह्यः पाठः ग्राह्यः – इति चाधः सूचितौ। किमपि पाठान्तरं मया न कल्पितम्। cr प्रकाशने सर्वथा (ग्रन्थे अधःसूचिकायां च) अविद्यमानः पाठो यद्यन्यप्रकाशनाद् गृहीतः स विषयः सूचितः।

५. प्राच्यपरिशोधनसंस्थायाः (Oriental Institute, Vadodara) प्रकाशनं (critical edition) cr इति आङ्ग्लाक्षराभ्यां निर्दिष्टम्।

६. यत्र मूलमर्थावगतेरपर्याप्तं तत्र cr बृहद्ग्रन्थस्य अधः–सूचिकात आवश्यकाः श्लोकाः पङ्क्तयो वा ग्राह्याः संयोज्याश्च अयं च विषयः + चिह्नेन सूचितः**।

---

* संशोधितप्रकाशनग्रन्थे तत्र तत्र पाठपरिवर्तनस्य आवश्यकता का? इयं चर्चा पृथक् कृता प्रथमभागस्य अनुबन्धे। ** द्रष्टव्या मम प्रथमभागस्य अनुबन्धे चर्चा।

७. तत्र तत्र लघुविवरणं नक्षत्रचिह्नेन अधःस्तात् कृतम्।

८. काव्यस्था आर्षप्रयोगा नवीनभाषायां परिवर्तिताः। यदि क्वचित् क्वचित् शिष्येरन् तत्राहं क्षन्तव्यः।

९. अस्मिन् ग्रन्थरचने मयैते ग्रन्था उपयुक्ताः।

A. वाल्मीकिरामायणम्। समीक्षितपाठात्मकम् Oriental Institute, Vadodara 1992 (cr) तद्बृहद्ग्रन्थश्च।

B. श्रीमद्रामायणम्।गोविन्दराजीयव्याख्या तथा महेश्वरतीर्थव्याख्या। आन्ध्रलिपिः।

C. श्रीमद्वाल्मीकीयरामायणम्। गीताप्रेस्। हिन्दीतात्पर्ययुतम्।

D. श्रीमद्रामायणम्। पुल्लेल श्रीरामचन्द्रविरचिता बालानन्दिनी आन्ध्रव्याख्या। आर्षविज्ञानट्रस्ट्। हैदराबाद्। 1990. आन्ध्रलिपिः।

१०. सरलगद्येन रचना कृता। अस्मिन् विषये अस्य ग्रन्थस्य प्रथमभागे यल्लिखितं तद् द्रष्टव्यम्। शब्दप्रयोगविषयः अनुबन्धे चर्चितः।

ग्रन्थप्रकाशनार्थं तिरुमलतिरुपतिदेवस्थानेन धनसहायः कृतः। तस्याः संस्थायाः कृतज्ञतां वाचयामि। मान्यः सुहृद्वरः सुगृहीतनामधेयः श्रीमान् पुल्लेल श्रीरामचन्द्रः सततं मम साहित्याभ्युदयाकाङ्क्षी विशेषतोऽस्य ग्रन्थस्य प्रोत्साहकश्च। एतेषां धन्यवादान् वाचयामि। मुद्रणात् पूर्वं ग्रन्थं पठित्वा अनुमोदमदात् श्रीमती Dr पैडिमर्रि शशिरेखा, Reader, Department of Sanskrit, Osmania University, Hyderabad. तत्रभवत्यै कृतज्ञतां निवेदयामि।

सम्प्रति मम पितृपादान् स्मरामि। मम पिता कीर्तिशेषः कालूरि व्यासमूर्तिः सर्वदा रामायणमहाभारतविवेचननिमग्न आसीत् चरमक्षणे सीतारामलक्ष्मणानां वनगमनं जल्पन् व्यसुरभवत्। आ बाल्याद् रामायणमहाभारतयोर्ममाभिरुचिस्तस्यैव प्रभावेण समुत्पन्ना समेधिता च। तस्मै कृतज्ञतां निवेदयितुं वाचो न प्रभवन्तीति नमस्कारशतमेव समर्पयामि।

विद्वद्भिर्मम ग्रन्थरचनाशयः परिशीलनीयः। दोषाः क्षन्तव्याः स्वयं संशोधनीयाश्च।

वन्दे वाल्मीकिकोकिलम्।

कालूरि हनुमन्तरावः

# अनुक्रमणिका

# श्रीमद्वाल्मीकिरामायणम्

## सरलगद्यात्मकम्

### अरण्यकाण्डम्

#### १

दण्डकारण्यं नाम महारण्यं प्रविश्य रामस्तापसाश्रमसमुदायं ददर्श। तदाश्रममण्डलं कुशचीरव्याप्तं वेदाध्ययनानुष्ठानशोभया समावृतं गगने प्रदीप्तं सूर्यमण्डलं यथा तथा दुर्दर्शं चासीत्। सर्वभूतानां शरण्यं सदा सुसंमृष्टाजिरमप्सरसां गणैर्नित्यं पूजितमुपनृत्तं चासीत्। विशालैरग्निशरणैः स्रुग्भिर्भाण्डैरजिनैः कुशैः समिद्भिस्तोयकलशैः फलैर्मूलैश्च तत् शोभते स्म। पुण्यैः स्वादुफलैरारण्यैर्महावृक्षैर्वृतं बलिभिर्होमैश्चार्चितं वेदघोषनिनादितं चाभवत्। तत्र बहूनि पुष्पाणि पद्मैर्युताः पुष्करिण्यश्चासन्। फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः सूर्यवैश्वानराभैः पुराणैर्मुनिभिस्तदुषितमभवत्। पुण्यैर्नियताहारैः परमर्षिभिः शोभितं ब्रह्मभवनसमानं वेदविद्भिर्ब्राह्मणैरुपशोभितं चासीत्। तत् तापसाश्रममण्डलं दृष्ट्वा रामो महद् धनुर्विज्यं कृत्वा अभ्यगच्छत्। दिव्यज्ञानोपपन्नास्ते महर्षयो रामं सीतां च दृष्ट्वा प्रीता अभिजग्मुः। ते महर्षय उद्यन्तं सोममिव धर्मचारिणं+ रामं लक्ष्मणं यशस्विनीं वैदेहीं च++ दृष्ट्वा सादरं स्वागतमूचुः। ते रामस्य रूपं शरीरसंघटनं लक्ष्मीं सौकुमार्यं सुवेषतां च विस्मिता ददृशुः। तथा आश्चर्यकरान् सीतारामलक्ष्मणाननिमिषैरिव नेत्रैर्ददृशुः। ते महाभागास्तस्मिन्नाश्रमसमुदाये पर्णशालायामतिथिं

---

+ Cr धर्मचारिणः। ग्राह्यः – धर्मचारिणम्।

++ पङ्क्तिर्ग्राह्या – लक्ष्मणं चैव दृष्ट्वा तु वैदेहीं च यशस्विनीम्।

रामं संन्यवेशयन्। तं यथाशास्त्रं सत्कृत्य सलिलमाजह्रुः। परमया मुदा युता मूलं पुष्पं फलं सर्वमाश्रमं च महात्मनो रामस्य निवेद्य प्राञ्जलयोऽब्रुवन्। राजा महायशा अस्य जनस्य धर्मपालो रक्षकः। पूजनीयो मान्यो दुष्टनिग्रहकर्ता च। राजा इन्द्रादिलोकपालानां चतुर्थभागः। स प्रजा रक्षति। तस्माद् राजा नमस्कृतः सन् वरान् भोगान् भुङ्क्ते। भवद्विषयवासिनो वयं भवता रक्ष्याः। नगरस्थो वनस्थो वा त्वमेवास्माकं राजा। वयं जितक्रोधा न्यस्तदण्डाः स्मः। गर्भो मात्रेव वयं त्वया शश्वद् रक्षणीयाः। एवमुक्त्वा वन्यैर्मूलफलादिभिः रामलक्ष्मणौ सीतां चार्चयामासुः। अन्ये च तापसा राममेवं तर्पयामासुः।

## २

अथ कृतातिथ्यो रामः अपरेद्युः सूर्योदयकाले स्नानादिकं निर्वर्त्य सर्वान् मुनीनामन्त्र्य वनमन्वगाहत। लक्ष्मणानुगतो रामो नानामृगगणाकीर्णं शार्दूलवृकसेवितं ध्वस्तवृक्षलतागुल्ममदृष्टजलाशयं नानापक्षिकूजितपूर्णं झिल्लिकागणनादितं वनमध्यं ददर्श। तस्मिन् घोरमृगायुते वनमध्ये रामो गिरिशृङ्गोन्नतं महास्वनं पुरुषादं राक्षसं ददर्श। स राक्षसः गभीराक्षो महावक्त्रो विकटो विकारोदरो जुगुप्सावहो विषमावयवो महोन्नतो भयंकरश्चादृश्यत। वसया रुधिरेण चार्द्रः स व्याघ्रचर्म ववसे। सर्वभूतानां भयंकरः स राक्षसो व्यात्तास्यः अन्तक इवासीत्। स आयसे शूले त्रीन् सिंहान् चतुरो व्याघ्रान् द्वौ वृकौ दश पृषतान् सविषाणं वसादिग्धं महद् गजस्य शिरश्चावसज्य महास्वनं विनदति स्म। स रामं लक्ष्मणं सीतां च दृष्ट्वैव सुसंक्रुध्दः अन्तकः कालः प्रजा इवाभ्यधावत्। स मेदिनीं चालयन्निव भैरवं नादं कृत्वा

वैदेहीमङ्केनादायापक्रम्याब्रवीत्। चीरजटाधरौ युवां सभार्यौ शरचापासिधरौ दण्डकारण्यं प्रविष्टौ। अत एव युवां क्षीणजीवितौ। तापसयोर्वां प्रमदया सह वासः कथम्? अधर्मचारिणौ मुनिविरुध्दायुधधरौ पापौ युवां कौ? अहं विराधो नाम राक्षसः सायुधो नित्यमृषिमांसानि भक्षयन् दुर्गमिदं वनं चरामि। वरारोहेयं नारी मम भार्या भविष्यति। अहं मृधे पापयोर्युवयोः रुधिरं पास्यामि। दुरात्मनो विराधस्य सगर्वितं धृष्टं तद् वाक्यं श्रुत्वा नितान्तं भीता सीता प्रवाते कदलीवत् प्रावेपत। विराधाङ्कगतां सीतां दृष्ट्वा परिशुष्यता मुखेन रामो लक्ष्मणमब्रवीत्। लक्ष्मण! नरेन्द्रस्य जनकस्य पुत्रीं मम भार्यां शुभाचारामत्यन्तसुखसंवृध्दां विराधाङ्के स्थापितां सीतां पश्य। अस्मासु कैकेय्या यदभिप्रेतं यद् वरेण वृतं च तत् तस्याः प्रियमिदानीं क्षिप्रं सुसंवृत्तम्। दीर्घदर्शिनी कैकेयी पुत्रार्थे राज्येन नातुष्यत्। सर्वभूतानां हितोऽहं वनं प्रस्थापितः। सा मम मध्यमा* माताद्य सकामास्ति। वैदेह्याः परस्पर्शः पितुर्विनाशात् स्वराज्यहरणाच्च मे दुःखतरः। इति बाष्पशोकपरिप्लुते रामे वदति क्रुध्दो लक्ष्मणो निरुध्दः सर्प इव श्वसन्नब्रवीत्। राम! त्वं भूतानां नाथो वासवोपमश्च। प्रेष्येण मया सह स्थितोऽपि अनाथ इव किमर्थं परितप्यसे? क्रुध्देन मयाद्य शरेण निहतस्य गतासो रक्षसो विराधस्य शोणितं भूमिः पास्यति। राज्यकामिनं भरतं मत्वा तस्मिन् मम यः क्रोधो बभूव तं वज्री वज्रमचले

---

* मध्यमेत्यत्र गोविन्दराजव्याख्यासारांशः। दशरथस्य प्रधानमहिषीषु तिसृषु कैकेयी कनिष्ठा। दशरथस्य सार्धत्रिशतं भार्या आसन्।तासां मध्यमा कैकेयी अर्थान्न ज्येष्ठा न च कनिष्ठा मध्यस्थास्वन्यतमा।

इव विराधे विमोक्ष्यामि। मम भुजबलेन वेगवत्प्रयुक्तो महान् शरोऽस्य महोरसि पततु। तनोर्जीवितं व्यपनयतु। ततोऽसौ विघूर्णितो मह्यां पततु।

३

अथ विराधः कौ युवाम्? क्व गमिष्यथः? ब्रूतमिति महता शब्देन वनं पूरयन्नपृच्छत्। ज्वलिताननं पृच्छन्तं तं राक्षसं राम आत्मन इक्ष्वाकुकुलमुवाच। आवां सच्चरित्रौ वनगोचरौ क्षत्रियौ। त्वां च वेदितुमिच्छावः। दण्डकान् चरसि। त्वं कः? विराधो राममुवाच। राजन्! मम वृत्तान्तं ते कथयामि निबोध। अहं जयस्य पुत्रः। शतह्रदा मम माता। पृथिव्यां सर्वे राक्षसा मां विराध इत्याहुः। तपसा ब्रह्मणः प्रसादाल्लोके शस्त्रेणावध्यता प्राप्ता। तेनैव वरेण मया अच्छेद्यता अभेद्यता च प्राप्ता। एनां प्रमदामुत्सृज्यानपेक्षौ त्वरमाणौ यथागतं पलायेथाम्। युवयोर्जीवितं नाददे। तं रामः कोपेन प्रत्युवाच। नीचकर्माणं त्वां धिक्। ध्रुवं मृत्युमन्विष्यसि। रणे तं प्राप्स्यसि। जीवन् न मत्सकाशान्निर्गमिष्यसि। ततो रामो धनुः सज्यं कृत्वा सुनिशितान् शरान् प्रयुज्य राक्षसं निजघान। रुक्मपुङ्खान् महावेगान् सुपर्णतुल्यगान् वायुतुल्यगान् सप्त बाणान् मुमोच। पावकोपमा बर्हवाससस्ते शरा विराधस्य शरीरं भित्त्वा* शोणितदिग्धा धरण्यां निपेतुः। तदा स महानादं विनद्य शक्रध्वजोपमं शूलं प्रगृह्य व्यात्ताननोऽन्तक इवाशोभत। ज्वलनोपमं वज्रतुल्यं तच्छूलं रामो द्वाभ्यां शराभ्यां गगने चिच्छेद। भयंकरस्य तस्य सव्यं बाहुं लक्ष्मणोऽखण्डयत्। दक्षिणं बाहुं रामश्चिच्छेद। भग्नबाहुर्मेघसंकाशः स राक्षसः संविग्नो वज्रभिन्नः पर्वत इव धरण्यां क्षिप्रं निपपात। राममिदं प्रोवाच। राम! त्वं कौसल्यायाः सुपुत्र

* अस्य ग्रन्थस्य प्रथमभागे भित्त्वा छित्त्वा दत्त्वा इति पदेषु अनवधाना त्वा इति मुद्रितमभवत्। पाठकाः कृपया शोधयन्तु इति प्रार्थये।

मे विदितोऽसि। वैदेही लक्ष्मणश्च ज्ञातौ। अहं तुम्बुरुर्नाम गन्धर्वः। कुबेरेण शप्तो घोरां राक्षसीं तनुं प्रविष्टोऽस्मि। रम्भासक्तोऽहमेकदा कुबेरस्य सेवाकाले उपस्थितो नासम्। संक्रुध्दो राजा कुबेरो मामशपत्। मया प्रार्थितः पुनराह। यदा दशरथपुत्रो रामस्त्वां संयुगे हनिष्यति तदा सहजस्वरूपं प्राप्य स्वर्गं गमिष्यसि। राघव! तव प्रसादात् सुदारुणादभिशापान्मुक्तोऽस्मि। स्वं भवनं गमिष्यामि। स्वस्ति वोऽस्तु। इतः सार्धयोजने दूरे धर्मात्मा सूर्यसन्निभो महर्षिः शरभङ्गो वसति। त्वं क्षिप्रं तमभिगच्छ। स ते श्रेयो विधास्यति। मामवटे निक्षिप्य कुशली व्रज। गतासूनां रक्षसामेष सनातनो धर्मः। येऽवटे विनिक्षिप्यन्ते तेषां शाश्वता लोकाः प्राप्स्यन्ते। एवं राममुक्त्वा शरपीडितो विराधो देहं विहाय स्वर्गं जगाम। विराधस्य वचः श्रुत्वा रामो लक्ष्मण! क्रूरस्य राक्षसस्य कुञ्जरस्येव वने सुमहत् श्वभ्रं खन्यताम्। इत्युक्त्वा वीर्यवान् रामो विराधं कण्ठे पादेनाक्रम्य तस्थौ। ततो लक्ष्मणः खनित्रेण विराधस्य पार्श्वतः सुमहत् श्वभ्रमखनत्।+ ततो रामस्तस्य कण्ठात् स्वपादं मुमोच*। शङ्कुकर्णं तं विराधं श्वभ्रे प्राक्षिपत्। श्वभ्रे तस्य देहपतनान्महान् शब्दोऽजायत**। एवं काञ्चनचित्रकार्मुकौ तौ रामलक्ष्मणौ

---

+ २५–२६ श्लोकयोर्मध्ये ग्राह्याः– तच्छ्रुत्वा राघवो वाक्यं लक्ष्मणं व्यादिदेश ह ततः खनित्रमादाय लक्ष्मणः श्वभ्रमुत्तमम् अखनत् पार्श्वतस्तस्य विराधस्य दुरात्मनः।। * किमर्थं रामो विराधस्य कण्ठं पादेनाचक्रामेति न ज्ञायते। ** मुक्तकण्ठो विराधो भीकरं नदन् श्वभ्रे पातित इति सर्वे व्याख्यातारः। परन्तु विराधो मृत एव। मृतः कथन्नामाक्रोशति? मृत एव श्वभ्रे पातितः स्यान्न तु जीवन्। शवस्यैव रामः कण्ठं पादेनाचक्राम न तु जीवतः। शस्त्रेणावध्यः कथं स शस्त्रेण हतः? कथमप्यस्मिन् कथने पूर्वापरविरोधो वर्तते।

राक्षसं निहत्य मैथिलीं परिगृह्य मुदितौ महारण्ये दिवि स्थितौ चन्द्रसूर्याविव विजहतुः।

४

भीमबले विराधं हत्वा सीतां परिष्वज्य समाश्वास्य रामो लक्ष्मणमब्रवीत्। दुर्गमिदं वनं क्लेशकरम्। अस्माकं वनवासानुभवो नास्ति। शीघ्रं महर्षिं शरभङ्गमभिगच्छामः। ततस्ते त्रयः शरभङ्गस्याश्रममुपजग्मुः। देवप्रभावस्य तपसा पूतात्मनस्तस्य शरभङ्गस्य समीपे महदद्भुतं ते ददृशुः। वपुषा विभ्राजमानं सूर्याग्नितुल्यप्रभं वसुधामस्पृशन्तं सुप्रभाभरणं विरजोऽम्बरधारिणं तद्विधैरेव बहुभिर्महात्मभिः पूज्यमानं देवेन्द्रमपश्यन्। हरितैर्वाजिभिर्युक्तं तरुणादित्यसन्निभमन्तरिक्षगतं रथं च तस्यादूरतो ददृशुः। पाण्डुरमेघसमुदायसमं चन्द्रमण्डलसन्निभं चित्रमाल्योपशोभितं विमलं छत्रं च ददृशुः। श्रेष्ठे रुक्मदण्डे वरनारीभ्यां गृहीते मूर्धनि धूयमाने चामरव्यजने चापश्यन्। गन्धर्वा अमराः सिध्दा बहवः परमर्षयश्चान्तरिक्षगतं देवं श्रेष्ठाभिर्गीर्भिरीडाञ्चक्रिरे। तत्र शतक्रतुं दृष्ट्वा रामो लक्ष्मणमुवाच। बहुभिर्यागेष्वाहूतस्य शक्रस्य ये हया अस्माभिः पुरा श्रुतास्त एवान्तरिक्षे दिव्याः सम्प्रति दृश्यन्ते। रथमभितः शतं शतं कुण्डलिनां यूनां खड्गपाणीनां समुदायाः सन्ति। सर्वेषां तेषामुरोदेशेषु ज्वलनसन्निभा हाराः सन्ति। सर्वे च पञ्चविंशतिवर्षवयस्कानां रूपं बिभ्रति। यथेमे प्रियदर्शना दृश्यन्ते तथा देवानां सर्वदा एतदेव वयो भवति। लक्ष्मण! वैदेह्या सह त्वं मुहूर्तमिहैव तिष्ठ यावदहं रथसमीपे एष द्युतिमान् क इति स्पष्टं जानामि। सौमित्रिमेवमुक्त्वा रामः शरभङ्गाश्रमं प्रति अभिचक्राम। ततो देवेन्द्रः समभिगच्छन्तं रामं

प्रेक्ष्य शरभङ्गेनानुज्ञातो विबुधानाह। यावदयं रामो मामुपगम्य नाभिभाषते तावदहं यास्यामि। अरिंदममेनं कृतार्थमचिराद् द्रष्टास्मि। देवैरपि सुदुष्करं कर्मानेन कर्तव्यम्। तत् कर्म निष्पाद्य ततः स मां द्रष्टुमर्हति।+ इतीन्द्रस्तं तापसमामन्त्र्य मानयित्वा रथेन दिवं ययौ। तत्पश्चाद् रामः सीतालक्ष्मणसमेतः अग्निहोत्रमुपासीनं शरभङ्गमुपागमत्। ते मुनीन्द्रस्य पादौ प्रणेमुस्तदनुज्ञाता निषेदुश्च। स तेषामातिथ्यं कृत्वा तस्मिन् दिने तत्रैवाश्रमे निवस्तुमाजुहाव। ततो रामः शक्रोपयानकारणमपृच्छत्। शरभङ्गस्तत् सर्वमकथयत्। राम! वरद इन्द्रो मां ब्रह्मलोकं निनीषति। स लोको मयोग्रेण तपसा जितः। अविजितमनस्कैर्दुष्प्रापश्च। परन्तु प्रियातिथिस्त्वं निकट आगतो मया ज्ञातोऽसि। त्वामदृष्ट्वा ब्रह्मलोकं न गच्छामि। त्वां समागम्य पश्चाद् देवलोकं गमिष्यामि। मया शुभा ब्राह्म्याः स्वर्ग्याश्च लोका जिताः। मामकांस्तान् लोकान् प्रतिगृह्णीष्व। एवमृषिणोक्तः सर्वशास्त्रविशारदो राम उवाच। महर्षे! अहमेव सर्वान् पुण्यलोकान् संपादयिष्यामि। अहमिह कानने त्वया प्रदिष्टं निवासस्थानमिच्छामि। एवमुक्तः शरभङ्गः पुनराह। त्वं शुचौ देशे तपस्विनं सुतीक्ष्णमभिगच्छ। स रमणीये वनोद्देशे ते वासं विधास्यति। एष पन्थाः। तात! मुहूर्तं मां पश्य यावज्जीर्णां त्वचमुरग इव गात्राणि जहामि। ततः शरभङ्गः अग्निं समाधायाज्येन मन्त्रवत्++ हुत्वा हुताशनं

---

+ Cr १८, १९ अस्पष्टार्थौ श्लोकौ। तयोः स्थाने ग्राह्यौ – यास्याम्यहमयं रामो यावन्मां नाभिभाषते। कृतार्थमेनमचिराद् द्रष्टास्म्यहमरिंदमम्। कर्म ह्यनेन कर्तव्यं महद् देवैः सुदुष्करम्। निष्पादयित्वा तत् कर्म ततो मां द्रष्टुमर्हति।।

++ Cr मन्त्रवित्। ग्राह्यः – मन्त्रवत्।

प्रविवेश। तदा वह्निस्तस्य महात्मनो रोमाणि केशान् जीर्णां त्वचमस्थीनि मांसं शोणितं च भस्मीचकार। स शरभङ्गमहर्षिः पावकसंकाशः कुमारः समपद्यत। तस्मादग्निचयादुत्थाय व्यरोचत। स आहिताग्नीनां महात्मनामृषीणां देवानां च लोकान् व्यतिक्रम्य ब्रह्मलोकं प्रविवेश। पुण्यकर्मा स द्विजर्षभो ब्रह्मलोके सानुचरं पितामहं ददर्श। ब्रह्मा च तं विप्रं समीक्ष्य ननन्द। सुस्वागतमित्युवाच।

५

शरभङ्गे दिवं प्राप्ते संगता मुनिसंघा राममभ्यगच्छन्। वैखानसा वालखिल्या वायुभक्षाः सलिलाहाराः स्थण्डिलशायिनः पत्राहाराः पञ्चाग्नितपसः अन्ये च बहुविधैर्नियमैर्बहुविधानि तपांसि कुर्वाणाः शरभङ्गाश्रमे राममभिजग्मुः। ते राममूचुः। महावीरस्त्वमिक्ष्वाकुकुलस्य पृथिव्याश्च देवानां मघवानिव प्रधानो नाथश्चासि। त्वं त्रिषु लोकेषु यशसा विक्रमेण च विश्रुतः। पितृभक्तिः सत्यं संपूर्णो धर्मश्च त्वयि सन्ति। महात्मानं धार्मिकं स्वामर्थित्वादासाद्य वक्ष्यामः। हे प्रभो! अस्माकमर्थित्वं क्षन्तुमर्हसि। यो राजा प्रजाभ्य आये षष्ठांशं करं गृहीत्वा पुत्रवन्न रक्षति तस्य महीपतेर्महानधर्मो भवेत्। सर्वान् विषयवासिनः प्राणसमान् सुतानिव स्वान् प्राणानर्पयन्निव नित्ययुक्तः सदा रक्षन् स शाश्वतीं स्थिरां कीर्तिं प्राप्नोति ब्रह्मणः स्थानमासाद्य तत्र च महीयते। प्रजा धर्मेण रक्षन् राजा मूलफलाशनेन मुनिना कृते परे धर्मे चतुर्थभागं विन्दति। राम! त्वन्नाथो ब्राह्मणभूयिष्ठो महान् सोऽयं वानप्रस्थगणः अनाथवद् राक्षसैर्भृशं पीड्यते। एहि। वने घोरै राक्षसैर्बहुधा हतानां पूतात्मनां बहूनां मुनीनां शरीराणि पश्य। पम्पानदीतीरे

मन्दाकिनीनदीतीरे चित्रकूटपर्वते च निवसतां महान् संहारस्तैः क्रियते। भयंकरकर्मभिः रक्षोभिररण्ये क्रियमाणं तपस्विनां घोरं विप्रकारं वयं सोढुं न शक्नुमः। अतः शरण्यं त्वां शरणार्थं समुपस्थिताः स्मः। निशाचरैर्बाध्यमानान् नः परिपालय। दीनानां मुनीनामिदं वचनं श्रुत्वा धर्मात्मा रामः प्रोवाच। एवं मां वक्तुं नार्हथ। अहं तपस्विनामाज्ञाप्यः। भवतामर्थसिध्द्यर्थं दैववशादहमागतोऽस्मि। तस्मान्मेऽयं वने वासो महाफलो भविष्यति। तपस्विनां शत्रून् राक्षसान् रणे हन्तुमिच्छामि। धर्मे धृतात्मा वीरः पूज्यचरित्रो रामस्तपोधनानामभयं दत्त्वा सलक्ष्मणो मुनिभिः सह सुतीक्ष्णमहर्षिमभिजगाम।

६

रामः सीतया लक्ष्मणेन तैर्द्विजैश्च सह सुतीक्ष्णस्याश्रमं प्रति जगाम। ते दूरमध्वानं गत्वा बहूदका नदीस्तीर्त्वा महामेघमिव श्याममुन्नतं विपुलं शैलं ददृशुः। ततस्ते विविधैर्द्रुमैर्व्याप्तं काननं विविशुः। बहुपुष्पफलद्रुमे घोरं वनं प्रविष्टा एकस्मिन् पार्श्वे चीरमालालङ्कृतमाश्रमं ददृशुः। तत्रासीनं मलपङ्कजटाधरं तपोवृध्दं सुतीक्ष्णं विधिवदासाद्य रामोऽभाषत। भगवन्! अहं रामोऽस्मि। भवन्तं द्रष्टुमागतः। हे धर्मज्ञ! तस्मान्मामभिवद। स महर्षिः रामं निरीक्ष्य बाहुभ्यां समाश्लिष्याब्रवीत्। रघुश्रेष्ठ! धर्मभृतां वर! राम! ते स्वागतम्। साम्प्रतं त्वया संयुतोऽयमाश्रमः सनाथ इवास्ति। त्वामेव प्रतीक्षमाणो महीतले देहं त्यक्त्वा इतो देवलोकं नारोहामि। राज्यभ्रष्टश्चित्रकूटमुपागत इति मे श्रुतोऽसि। इहोपयातः शक्रो मम पुण्येन कर्मणा सर्वान् लोकान्

सलक्ष्मणस्त्वं मत्प्रसादाद् विहर। बुध्दिमान् राम उग्रतपसं सत्यवादिनं दीप्तं तं महर्षिं वासवो ब्रह्माणमिव प्रत्युवाच। महर्षे! अहमेव सर्वान् लोकान् संपादयिष्यामि। अहमिह कानने त्वया प्रदिष्टं निवासस्थानमिच्छामि। भवान् सर्वत्र कुशलः सर्वभूतहिते रत इति गौतमेन महात्मना शरभङ्गेनाख्यातम्। रामेणैवमुक्तो महर्षिर्महता हर्षेण युतो मधुरं वाक्यमब्रवीत्। अयमेवाश्रमो यत्र ऋषिसंघाः संचरन्ति। सदा चायं मूलफलैर्युतः। इह सुखमुष्यताम्। मृगसंघा इममाश्रममागम्य स्वरूपचेष्टागतिभिः पश्यतां मनांसि लोभयित्वा अटित्वा अकुतोभयाः प्रतिगच्छन्ति। तच्छुत्वा रामः सशरं धनुर्विकृष्य महाभाग! यदि तान् समागतान् मृगसंघानहं निशितैः शरैर्हन्यां तेषु त्वं दयावान् दुःखितो भवेः। तस्मादेतस्मिन्नाश्रमे चिरं मे वासमयुक्तं मन्ये। एवं मुनिमुक्त्वा रामः पश्चिमां सन्ध्यामन्वास्य तत्र वासमकल्पयत्। सन्ध्यानन्तरं रात्र्यां महात्मा सुतीक्ष्णस्तेभ्यस्तापसभोज्यमन्नं सुसत्कृत्य स्वयं ददौ।

७

सीतालक्ष्मणसहितो रामः सुतीक्ष्णेन सम्मानितो निशां तत्र विनीय प्रभाते प्रत्यबुध्यत। उत्पलगन्धेन सुशीतेन तोयेन सस्नौ। ततस्ते प्रातःकाले अग्निं सुरांश्च तपस्विनिवासस्थाने वने विधिवदभ्यर्च्य उदयमानं सूर्यं दृष्ट्वा विगतकल्मषाः सुतीक्ष्णमभिगम्य मृदु वचनमूचुः। भगवन्! पूज्येन त्वया सत्कृता वयं सुखोषिताः स्मः। आपृच्छामहे। प्रयास्यामः। मुनयो नस्त्वरयन्ति। पुण्यशीलानां दण्डकारण्यवासिनामृषीणां कृत्स्नमा-श्रममण्डलं द्रष्टुं त्वरामहे। धर्मनित्यैस्तपसा आत्मनिग्रहवद्भिर्ज्वालारहितैः

साधुसमागमवर्जितः अन्यायमार्गेणागतां लक्ष्मीं प्राप्येव सूर्यो यावदविषह्यातपो नातिविराजते तावद् गन्तुमिच्छामः। इत्युक्त्वा सीतालक्ष्मणाभ्यां सह रामो मुनेश्चरणौ ववन्दे। स मुनिपुङ्गवश्चरणौ संस्पृशन्तौ रामलक्ष्मणावुत्थाप्य गाढमाश्लिष्य सस्नेहमिदमब्रवीत्। राम! सौमित्रिणा सह छाययेवानुवृत्तयानया सीतया सार्धं च शुभकरं मार्गं प्रयाहि। महातपस्विनामेषां दण्डकारण्यवासिनामाश्रमपदं पश्य। सुबहुमूलफलानि पुष्पितानि प्रशस्तमृगयूथानि शान्तपक्षिगणानि वनानि फुल्लपङ्कजषण्डानि प्रसन्नसलिलानि कारण्डवविकीर्णानि तटाकानि सरांसि दृष्टिरम्याणि गिरिप्रस्रवणानि मयूराभिरुतानि रमणीयान्यरण्यानि च द्रक्ष्यसि। वत्स राम! गम्यताम्। सौमित्रे! भवानपि गच्छतु। दृष्ट्वा पुनरेवाश्रमं प्रत्यागन्तव्यम्। एवमुक्तो रामस्तथेत्युक्त्वा मुनिं प्रदक्षिणं कृत्वा प्रस्थातुमुपचक्रमे। ततः सीता तयोर्भ्रात्रोस्तूणीरौ धनुषी खड्गौ च ददौ। तूणीरावाबध्य चापे चादाय रामलक्ष्मणौ प्रयातुमाश्रमान्निष्क्रान्तौ।

## ८

सुतीक्ष्णेनानुमतं प्रस्थितं भर्तारं वैदेही स्निग्धया वाचा प्राह। धर्मो महान् वर्तते स सुसूक्ष्मेण विधिना प्राप्यते। कामजाद् व्यसनान्निवृत्तेनैवेह स शक्यः। लोकेऽस्मिन् कामजानि त्रीण्येव व्यसनानि भवन्ति। मिथ्यावाक्यं महद् व्यसनम्। तस्माद् गुरुतरौ व्यसनविशेषौ परदाराभिगमनं विना वैरं क्रूरत्वं च। राम! मिथ्यावाक्यं न ते भूतं न च भविष्यति। धर्मनाशनं परस्त्रीणामभिलषणं कुतः? मिथ्यावचनाभावः परस्त्रीनिरभिलाषश्च सर्वं जितेन्द्रियैर्वोढुं शक्यम्। तव जितेन्द्रियत्वमहं जानामि। परन्तु

विना वैरमज्ञानाद् भयंकरं परप्राणहिंसनं तृतीयमिदं व्यसनं ते समुपस्थितम्। वीर! दण्डकारण्यवासिनामृषीणां रक्षणार्थाय संयति रक्षसां वधस्त्वया प्रतिज्ञातः। एतन्निमित्तं त्वं धृतबाणशरासनो भ्रात्रा सह दण्डकारण्यमिति विश्रुतं वनं प्रस्थितोऽसि। त्वामेवं प्रस्थितं दृष्ट्वा सर्वथा तव श्रेयश्चिन्तयन्त्या मे मनश्चिन्ताकुलं संजातम्+ । वीर! दण्डकान् प्रति गमनं मे न रोचते। कारणं शृणु। बाणधनुष्पाणिस्त्वं भ्रात्रा सह वनं गतः सर्वान् मृगराक्षसादीन्वनचरान् दृष्ट्वा शरव्ययं किं न कुर्याः++।क्षत्रियाणां समीपतः स्थितं धनुः अग्नेरिन्धनानि च तेजो बलं च भृशं प्रवर्धयन्ते। पुरा पुण्ये रतमृगद्विजे कस्मिंश्चिद् वने सत्यवाक् शुचिस्तपस्वी कश्चन किलासीत्। तस्य तपसो विघ्नं कर्तुं भटरूपधृत् खड्गपाणिरिन्द्र आश्रममागच्छत्। आश्रमे तपसि तिष्ठतस्तस्य मुनेरिन्द्रो न्यासरूपेण खड्गमदात्। यदाप्रभृति मुनिना स खड्गो न्यासरूपेण स्वीकृतस्तदाप्रभृति तदायुधं गृहीत्वैव संचरति स्म तद्रक्षणतत्परः। नित्यं शस्त्रं परिवहन् स तपोधनस्तपसि निश्चयं त्यक्त्वा क्रमेण स्वां बुद्धिं रौद्रीं चकार। ततस्तस्य शस्त्रस्य संवासाद् रौद्राभिरतः स मुनिः प्रमत्तः अधर्मकर्षितो नरकं जगाम। स्नेहाच्च बहुमानाच्च त्वामहं स्मारयामि न तु शिक्षये। गृहीतधनुषा त्वया वैरं विना

---

+ Cr ९ श्लोकः। ग्राह्यः – त्वां चैव प्रस्थितं दृष्ट्वा राम! चिन्ताकुलं मनः। सर्वतश्चिन्तयन्त्या मे तव निःश्रेयसं नृप।।

++ Cr कच्चित् कुर्याः। ग्राह्यः किं न कुर्याः। कच्चित् पाठश्च साधुः स्यात् यतः प्राचीनसाहित्ये कच्चित्शब्दः प्रश्नार्थक एव। यथा कालिदासः शाकुन्तले षष्ठाङ्के – कच्चिदहमिव विस्मृतवांस्त्वमपि।

दण्डकाश्रितान् राक्षसान् हन्तुं बुद्धिः कथमपि न कार्या। अपराधं विना भवता कर्तुमभिलषितं जनहननमहं न कामये। शूराणां क्षत्रियाणां स्वधर्मनिरतात्मनामार्ताभिरक्षणमेतावद् धनुषा कार्यम्+। शस्त्रं क्व च वनं च क्व? क्षात्रं क्व तपश्च क्व? इदं व्याविद्धम्। अस्माभिर्देशधर्मः पूज्यताम्। त्वं सम्प्रति क्षात्रधर्मे नासि वने मुनिवृत्त्यां वर्तसे। यस्मिन् धर्मे त्वमसि स धर्मः सेव्यताम्। आर्य! तस्मात् शस्त्रसेवनाद् बुद्धिः कलुषा जायते। पुनर्गत्वा अयोध्यायां क्षत्रधर्मं चरिष्यसि। राज्यं संत्यज्य वनमागतस्त्वं यदि निरतो मुनिर्भवेस्तर्हि मम श्वश्रूश्वशुरयोः पूर्णा प्रीतिर्भवेत्। धर्मादर्थः प्रभवति। धर्मात् सुखं प्रभवति। सर्वो धर्मेण सर्वं लभते। धर्मसारमिदं जगत्। निपुणैरात्मानं तैस्तैर्नियमै प्रयत्नतः कर्शयित्वा++ धर्मः प्राप्यते। सुखात् सुखसाधको धर्मो न लभ्यते। सौम्य! नित्यं शुचिमतिस्तपोवने धर्मं चर। त्रैलोक्यमपि तुभ्यं तत्त्वतो विदितं हि। स्त्रीचापलादेतन्मयोदाहृतम्। तव धर्मं वक्तुं कः समर्थः? तथापि बुद्ध्यानुजेन सह विचार्य यद् रोचते तदविलम्बितं कुरु।

## ९

पतिभक्तिपूर्णं सीताया वचनं श्रुत्वा रामः प्रत्युवाच। धर्मज्ञे! मयि स्नेहात् स्वोत्तमकुलप्रसिद्धेः स्वस्य च सदृशं हितं वचनं त्वयोक्तम्। देवि! पीडितानां दीनालापा न भवेयुरिति क्षत्रियैश्चापो धार्यते इति त्वयैवोक्तम्। अतः किं न्वह वक्ष्यामि? संशितव्रता दण्डकारण्ये ते मुनय आर्ताः स्वयमागम्य

---

+ Cr क्षत्रियाणां तु वीराणां वनेषु नियतात्मनाम्। ग्राह्यः – क्षत्रियाणा हि शूराणां स्वधर्मनियतात्मनाम्। ++ Cr कर्षयित्वा। ग्राह्यः कर्शयित्वा।

मां शरणं गताः। मूलफलाशना धर्मनिरता वने वसन्त एते मुनयः क्रूरकर्मभिः राक्षसैर्भीताः सुखं न लभन्ते। काले काले विविधैर्नियमैर्नियता मुनयो वने नरमांसोपजीविभिः राक्षसैर्भक्ष्यन्ते। भक्ष्यमाणा दण्डकारण्यवासिनो द्विजसत्तमास्ते मुनयः अस्माननुगृहाणेति मामवोचन्। एवं तेषां मुखाच्च्युतं वचनं श्रुत्वा मया चरणशुश्रूषां कृत्वैतद् वाक्यमभिहितम्। भवन्तो मे प्रसीदन्तु। समीपमागम्य मयैव भवतां सेवा कार्या। यद् भवन्त एव विप्रा मामुपस्थितास्तन्ममातुला ह्रीर्जायते। किं भवतां करोमीति मया तेषां सन्निधौ व्याहृतम्। तैः सर्वैः समागम्य वागियमुक्ता। बहुभिः स्वेच्छारूपिभिः राक्षसैर्दण्डकारण्ये भृशमर्दिताः स्मः। भवान् नस्त्रातुमर्हति। पिशिताशना दुर्धर्षा राक्षसा होमकाले पर्वकालेषु चास्मान् धर्षयन्ति। राक्षसैर्धर्षितानां दीनानां तपस्विनां शरणं मृगयमाणानां नो भवान् परमा गतिः। वयं तपःप्रभावेण निशाचरान् हन्तुं कामं शक्ताः स्मः। किन्तु चिरार्जितं तपः खण्डयितुं नेच्छामः। तपो नित्यं बहुविघ्नं दुश्चरं चैव। तेन कारणेन राक्षसैर्भक्ष्यमाणा अपि शापं न मुञ्चामः। तस्माद् दण्डकारण्यवासिभिः रक्षोभिरदर्चमानान् नः सह भ्रात्रा त्वं रक्ष। वयं वने त्वन्नाथा हि। मयैतद् वचः श्रुत्वा दण्डकारण्ये ऋषीणां कार्त्स्न्येन परिपालनं संश्रुतम्। संश्रुत्य जीवन् प्रतिश्रवमन्यथाकर्तुं न शक्ष्यामि। सदा मे सत्यमिष्टम्। सीते! अहं जीवितं लक्ष्मणं त्वां वा जह्याम्। प्रतिज्ञां विशेषतो ब्राह्मणेभ्यः संश्रुत्य न जह्याम्। अनुक्तेनापि ऋषीणां परिपालनं मया कार्यम्। प्रतिज्ञाय किं पुनः? अनघे। मम स्नेहात् सौहार्दाच्च त्वयेदं वच उक्तम्। अहं परितुष्टोऽस्मि। अनिष्टे नानुशिष्यते हि। तव वचनं तव

कुलस्यात्मनश्च सदृशमनुकूलं चास्ति। इति सीतामुक्त्वा धनुष्मान् रामो लक्ष्मणेन सह रम्याणि तपोवनानि जगाम।

## १०

रामः अग्रतः सीता मध्ये च जग्मतुः। धनुष्पाणिर्लक्ष्मणोऽनुजगाम। ते विविधान् शैलान् वनानि रम्या नदीः पुलिनचारिणः सारसान् चक्रवाकान् जलपक्षिभिर्युतानि सपद्मानि सरांसि यूथबद्धान् पृषतान् मदोन्मत्तान् विषाणिनो महिषान् वराहान् द्रुमवैरिणो गजांश्च पश्यन्तो जग्मुः। ते दूरमध्वानं गत्वा सूर्यास्तमयवेलायां रक्तश्वेतपद्मपूर्णं संक्रीडद्गजयूथरम्यं जलचारिभिः सारसैर्हंसैः कादम्बैः संकुलं योजनायामं योजनविस्तीर्णं मनोहरं तटाकं ददृशुः। प्रसन्नसलिले रम्ये तस्मिन् सरसि गीतवादित्रनिर्घोषः शुश्रुवे न तु कश्चन ददृशे। ततो रामलक्ष्मणौ कौतूहलात् (सहागतं) धर्मभृतं नाम मुनिं पप्रच्छतुः। महामुने! अत्यद्भुतमिदं संगीतं श्रुत्वा नः सर्वेषां महत् कौतूहलं जातम्। इदं किम्? साधु कथ्यताम्। राघवेणैवं पृष्टो मुनिः सरसः प्रभावं समस्तं च कथयितुमारेभे। इदं माण्डकर्णिनामकेन मुनिना तपसा निर्मितं पञ्चाप्सरो नाम तटाकम्। इदं सर्वकालेषु च एकविधं तिष्ठति। महामुनिः स माण्डकर्णिर्वायुभक्षो जलस्थितो दशवर्षसहस्राणि तीव्रं तपस्तताप। ततःअग्निनायकाः सर्वे देवाः प्रव्यथिताः परस्परं समागम्याब्रुवन्। एष मुनिरस्माकं कस्यचित् स्थानं प्रार्थयते। इति निश्चित्य तस्य मुनेस्तपोविघ्नं कर्तुं सर्वैर्देवैर्विद्युच्चञ्चलकान्तयः पञ्च प्रधाना अप्सरसो नियोजिताः। लोकज्ञः स मुनिस्ताभिरप्सरोभिः सुरकार्यसिद्धये मदनाधीनः कृतः। ताः पञ्चाप्सरसो मुनेः पत्नयो बभूवुः। तासां गृहमस्मिन् तटाके

अन्तर्हितं निर्मितम्। ताः पञ्चाप्सरसो यथासुखं निवसन्त्यस्तपोयोगाद् यौवनमास्थितं मुनिं रमयन्ति। संक्रीडन्तीनां तासां वादित्रनिस्वनो भूषणोन्मिश्रो मनोहरो गीतशब्दश्चैष श्रूयते। तच्छ्रुत्वा रामलक्ष्मणौ आश्चर्यमित्यूचतुः। मुनावेवं वदति कुशचीरव्याप्तं नानावृक्षसमावृतं तदाश्रममण्डलं ते ददृशुः। ततो रामः सीतालक्ष्मणाभ्यां सह प्रविश्य शोभायुक्ते तस्मिन्नाश्रममण्डले सुखमुवास। येषां सकाशे पूर्वमुषितवान् तेषां तपस्विनामाश्रमान् पर्यायेण जगाम। कस्मिंश्चिदाश्रमे दश मासान् क्वचिदेकं संवत्सरं क्वचिच्चतुरो मासान् क्वचित् पञ्च मासान् अपरत्र षण्मासान् अन्यत्र मासाधिककालं+ क्वचित् सार्धमासं कस्मिंश्चित् त्रीन् मासान् क्वचिदष्ट मासांश्च सुखं न्यवसत्। इत्थमाश्रमेषु निवसतो रममाणस्यानुकूल्येन दश संवत्सरा ययुः। एवं परिसृत्य रामः सीतालक्ष्मणसहितः पुनरेव सुतीक्ष्णस्याश्रममाजगाम। मुनिभिः सम्मानितस्तत्र च कञ्चित् कालमुवास। अथ कदाचित् सुतीक्ष्णं रामो विनयादब्रवीत्। भगवान् मुनिश्रेष्ठः अगस्त्यः अस्मिन्नरण्ये वसतीति श्रुतम्। परन्तु महत्यस्मिन् वने तं देशं न जानामि। तस्य महर्षेः पुण्यमाश्रमपदं कुत्रास्ति? भवतोऽनुग्रहाद् वयं त्रयो मुनिमगस्त्यमभिवादयितुं तत्राभिगच्छेम। तं मुनिवरं शुश्रूषितुं महान् मनोरथो मे हृदि परिवर्तते। तच्छ्रुत्वा प्रीतः सुतीक्ष्णो रामं प्रत्युवाच। अहमेवागस्त्याश्रमं गच्छतेति वक्तुकामोऽस्मि। दिष्ट्या स्वयमेव मां ब्रवीषि। महामुनेरगस्त्यस्याश्रमस्थानं तवाख्यामि। अस्मादाश्रमात् चत्वारि योजनानि दक्षिणेन याहि। तत्र अगस्त्यभ्रातुर्महान् श्रीमानाश्रमोऽस्ति। पिप्पलीवनशोभिते

---

+ Cr अपरत्राधिकान् मासान्। ग्राह्यः – अपरत्राधिकं मासात्।

बहुपुष्पफले रम्ये नानाशकुनिनादिते स्थलप्राये वनोद्देशे स आश्रमोऽस्ति। तत्र प्रसन्नसलिलाः शिवा हंसकारण्डवाकीर्णाश्चक्र-वाकोपशोभिता विविधाः पद्मिन्यो भवन्ति। तत्रैकां रजनीमुषित्वा प्रभाते गम्यताम्। वृक्षसमुदायस्य पार्श्वतो दक्षिणां दिशमास्थाय योजनं दूरं गत्वा तत्रागस्त्याश्रमस्थानं पश्य। बहुपादपसंवृते तस्मिन् वनोद्देशे भवन्तस्त्रयो रंस्यन्ते। महामुनिमगस्त्यं द्रष्टुं यदि त्वया बुद्धिः कृता तर्हि अद्यैव गमनं निश्चिनु। अथ ते त्रयो मुनिमभिवाद्यागस्त्याश्रमं प्रति प्रतस्थिरे। मार्गे ते रम्याणि वनानि गगनोन्नतान् पर्वतान् सरांसि सरितश्च ददृशुः।सुतीक्ष्णोपदिष्टेन तेन पथा सुखं गत्वा परमसंहृष्टो रामो लक्ष्मणमब्रवीत्। पुण्यकर्मणः अगस्त्यमुनेर्भ्रातुराश्रमपदमिदमेव नूनं दृश्यते। पथि फलभारेण पुष्पभारेण च संनताः सहस्रशो वृक्षा दृश्यन्ते। सहसा पवनोत्क्षिप्तः कटुकोदयः पक्वानां पिप्पलीनां गन्धो वनादुपगतः। तत्र तत्र राशीकृताः काष्ठसंचया दृश्यन्ते। लूना वैडूर्यवर्चसो दर्भाश्च पथि दृश्यन्ते। आश्रमस्थस्य पावकस्य कृष्णमेघाग्रोपमं धूमाग्रं वनमध्ये संप्रदृश्यते। पवित्रतीर्थेषु कृतस्नाना द्विजाः स्वयमार्जितैः कुसुमैः पुष्पोपहारं कुर्वन्ति। सुतीक्ष्णवचनेनायमेवा-गस्त्यभ्रातुराश्रमो भवति। अस्यैव भ्रात्रागस्त्येन लोकानां हितकाम्यया मृत्युस्वरूपौ राक्षसौ वातापील्वलौ तरसा निगृह्येयं दक्षिणा दिङ् निवासयोग्या कृता। एकदेह ब्राह्मणघ्नौ वातापिरिल्वलश्च भ्रातरौ महासुरौ सहितावास्तां किल। क्रूर इल्वलो ब्राह्मणरूपं धृत्वा व्याकरणशुद्धां भाषां वदन् श्राद्धमुद्दिश्य विप्रानामन्त्रयते स्म। ततो मेषरूपिणं भ्रातरं हत्वा पाकेन संस्कृत्य श्राद्धदृष्टेन कर्मणा तान् ब्राह्मणान् भोजयति

स्म। ततस्तेषां विप्राणां भुक्तवतामिल्वलो महता स्वरेण वातापे निष्क्रमस्वेति वदति स्म। ततो वातापिर्भ्रातुर्वचः श्रुत्वा मेषवन्नदन् ब्राह्मणानां शरीराणि भित्त्वा भित्त्वा विनिष्पतति स्म। पिशिताशनैः कामरूपिभिः परिजनैः संहत्य ताभ्यां भ्रातृभ्यां ब्राह्मणानां सहस्राण्येवं नित्यशो विनाशितानि बभूवुः। तदा देवैः प्रार्थितेन महर्षिणागस्त्येन श्राद्धे निमन्त्रितेन स महासुरो भक्षितः किल। ततः स इल्वलः किं श्राद्धं संपन्नमितिअगस्त्यमुक्त्वा उत्तरापोशनं दत्त्वा निष्क्रमस्वेति भ्रातरमभ्यभाषत। धीमान् मुनिसत्तमः अगस्त्यः भ्रातरमुद्दिश्य तथा भाषमाणं विप्रघातिनमिल्वलं प्रहसन्नुवाच। मया जीर्णस्य रक्षसो मेषरूपस्य यमसादनँ गतस्य ते भ्रातुर्निष्क्रमितुं शक्तिः कुतः? भ्रातुर्निधनसूचकमगस्त्यस्य वचः श्रुत्वा निशाचरः क्रोधात् तं प्रधर्षयितुमारेभे। सोऽगस्त्यमभ्यद्रवत्। दीप्ततेजसा मुनिना अनलकल्पेन चक्षुषा निर्दग्धो निधनं गतः। एवमगस्त्येन विप्रानुकम्पयेदं दुष्करं कर्म कृतम्। तस्यैव भ्रातुरयमाश्रमः। अयमाश्रमस्तटाकैर्वनैश्च शोभते। एवं रामे सौमित्रिं कथयति सूर्यः अस्तंगतः संध्याकाल आगतश्च। भ्रात्रा सह रामो यथाविधि सायंसंध्यामुपास्याश्रमपदं प्रविवेश। तमृषिमभ्यवादयत्। रामः सगौरवं तेन मुनिना प्रतिगृहीतो मूलफलानि प्राश्य तामेकां निशां न्यवसत्। अपरेद्युरुदिते सूर्ये रामः अगस्त्यस्य भ्रातरमामन्त्रयत। भगवन्! निशां सुखमध्युषितोऽस्मि। त्वां नमस्कृत्यामन्त्रये। तवाग्रजं द्रष्टुं गच्छामि। गम्यतामिति तेन मुनिनोक्तो रामस्तद् वनमवलोकयन् यथोद्दिष्टेन मार्गेण जगाम। मार्गे रामो बहुविधान् वृक्षान् ददर्श। गजहस्तैर्विमृदितान् वानरैरुपशोभितान् मत्तैः शतशः शकुनिसंघैः प्रणादितान् पुष्पितान् पुष्पिताग्राभिर्लताभिरनुवेष्टितान् शतशः कान्तारपादपान् ददर्श। तदा रामो लक्ष्मणमुवाच। वृक्षाः स्नि-

ग्धपत्रा मृगा द्विजाश्च शान्ताः। भावितात्मनो महर्षेराश्रमेण नातिदूरस्थेन भवितव्यम्। स्वेन कर्मणा लोके अगस्त्य* इति विख्यातस्य मुनेः परिश्रान्तश्रमापह आश्रमो दृश्यते। प्राज्यधूमाकुलवनश्चीरपङ्क्तिपरिष्कृतः प्रशान्तमृगयूथो नानाशकुनिनादित आश्रमो दृश्यते। लोकानां हितकाम्यया मृत्युरूपौ राक्षसौ वातापील्वलौ निगृह्य दक्षिणा दिङ् निवासयोग्या येन कृता तस्यागस्त्यस्यायमेवाश्रमः। यस्य प्रभावाद् राक्षसैरियं दक्षिणा दिक् त्रासाद् दृश्यते नोपभुज्यते तस्यागस्त्यस्येदमेवाश्रमपदम्। यदाप्रभृति पुण्यकर्मणागस्त्येनेयं दिगाक्रान्ता तदाप्रभृति रजनीचरा निर्वैराः प्रशान्ताश्च सन्ति। सामर्थ्यवतीयं दक्षिणा दिग् भगवतो मुनेरगस्त्यस्य नाम्ना त्रिषु लोकेषु प्रथिता क्रूरकर्मणां दुर्धर्षा चास्ति। एकदाचलोत्तमो विन्ध्यो भास्करस्य मार्गं निरोद्धुं व्यजृम्भत। अगस्त्यस्य निदेशं पालयन् न ववृधे। श्रीमान् विनीतमृगसेवितोऽयमाश्रमो लोके विश्रुतकर्मणो दीर्घायुषस्तस्यागस्त्यस्यास्ति। लोकार्चितः साधुरेष महामुनिः सतां हिते नित्यं रतः। एष श्रेयसास्मानभिगतान् योजयिष्यति। अहमत्राश्रमे महामुनिमगस्त्यमाराधयिष्यामि। वनवासस्य शेषमिह वत्स्यामि। गन्धर्वा देवाः सिद्धा महर्षयश्चात्रागस्त्यं पर्युपासते। मृषावादी वा क्रूरो वा शठो वा नृशंसो वा कामवृत्तो वात्र न जीवेत्। एष मुनिस्तथाविधप्रभावः। देवा यक्षाः पतगा नागाश्च धर्ममाराधयन्तो नियताहारा अस्मिन्नाश्रमे निवसन्ति। महात्मानः परमर्षयोऽस्मिन्नाश्रमे तपःसिद्धास्त्यक्तदेहा नवैर्देहैः सूर्यसन्निभैर्विमानैः स्वर्याताः। पुण्यात्मभिः प्राणिभिरत्राराधिता देवा यक्षत्वममरत्वं विविधानि राज्यानि च प्रयच्छन्ति। सौमित्रे! आश्रमपदमागताः स्मः। अग्रतः प्रविश। मां सीतया सहेह प्राप्तमृषये निवेदय।

---

* अगं पर्वतं स्तम्भितवानिति अगस्त्यपदव्युत्पत्तिः। इति गोविन्दराजः।

## ११

लक्ष्मण आश्रमस्थानं प्रविश्यागस्त्यशिष्यमासाद्योवाच। राज्ञो दशरथस्य, ज्येष्ठः पुत्रो रामो भार्यया सीतया सह मुनिमगस्त्यं द्रष्टुमागतः। अहं तस्यावरजो भ्राता लक्ष्मणस्तस्यानुकूलो हितश्चास्मि। त्वयाहं श्रुतोऽपि स्याम्। ते वयं पितृशासनादत्युग्रं वनं प्रविष्टाः स्मः। भगवन्तं द्रष्टुमिच्छामः। लक्ष्मणवाक्यं श्रुत्वागस्त्यशिष्योऽग्नि–गृहं प्रविश्य कृताञ्जलिः राममागतं महामुनेरुवाच। दशरथस्य ज्येष्ठः पुत्रो रामोऽनुजेन लक्ष्मणेन भार्यया सीतया च सहाश्रमपदं प्रविष्टः। ते भवन्तं द्रष्टुं सेवितुं चागताः। अत्रानन्तरं कार्यमाज्ञापयितुमर्हसि। मुनिरिदमुवाच। दिष्ट्या रामश्चिरस्य मां द्रष्टुमद्य समुपागतः। तस्यागमनमहं प्रतीक्षे। भार्यया लक्ष्मणेन च सह सत्कृतो रामः प्रवेश्यताम्। शिष्यस्तथेत्युक्त्वा त्वरितो गत्वा रामं प्रवेष्टुमुवाच। ततस्ते त्रयः प्रशान्तहरिणाकीर्णमाश्रममवलोकयन्तः प्रविविशुः। रामस्तत्र ब्रह्मणः अग्नेर्विष्णोर्महेन्द्रस्य विवस्वतः सोमस्य भगस्य कुबेरस्य धातुर्विधातुर्वायोश्च स्थानानि ददर्श*।

---

* श्लोके (१७) ददर्श इत्यर्थकं पदं न विद्यते। BCD ग्रन्थेषु "स्थानं च पाशहस्तस्य वरुणस्य महात्मनः। स्थानं तथैव गायत्र्या वसूनां स्थानमेव च।। स्थानं च नागराजस्य गरुडस्थानमेव च कार्तिकेयस्य च स्थानं धर्मस्थानं च पश्यति।।" इति काश्चनान्याश्च देवता उक्ताः। शिवस्य तु नाम न कथितम्। तत्र गोविन्दराजो व्याख्याति। – एता देवता यायजूकेन मुनिना पूजार्थं प्रतिष्ठिता इति बोध्यम्। अत्र पूज्यदैवतेषु रूद्रस्यानुपादानादपूज्यत्वमुक्तम्। अधुना जनैः कैश्चित् पूज्यमानता तु तामसशास्त्रानुरोधेनेति बोध्यम्। इति। श्रीरामायणतात्पर्यसारसंग्रहस्तोत्रे अप्पय्यदीक्षित एवमाह। अगस्त्याश्रमे प्रविशन् रामः सर्वा देवता अगस्त्यमुपासते इत्युवाच (१०–८७)। शिवो न अगस्त्योपासकः। ततः सर्वेभ्यो देवेभ्यः शिव उत्कृष्टः सूच्यते इति। (D)। रामायणं काव्यम्। मताभिप्रायस्य तन्निदानं न कार्यम्। इति सर्वे काव्यविदो जानन्त्येव। धाता विधाता दृश्यताम् अयो–२२.

ततः शिष्यपरिवृतो मुनिरभिनिष्पपात। रामो मुनीनामग्रतो दीप्ततेजसमगस्त्यं ददर्श लक्ष्मणं च प्राह। भगवानगस्त्यो निष्क्रामति। तेजोविशेषेण तपसां निधिमवगच्छामि। सूर्यवर्चसमगस्त्यमुद्दिश्यैवमुक्त्वा रामस्तस्य पादौ जग्राह। मुनिमभिवाद्य सीतारामलक्ष्मणाः कृताञ्जलयस्तस्थुः। आसनोदकैरर्चयित्वा प्रतिगृह्य कुशलं पृष्ट्वा आस्यतामिति मुनिरुवाच। ततः अग्निं हुत्वार्घ्यं प्रदायातिथीन् प्रतिपूज्य वानप्रस्थधर्मेण तेषां भोजनं ददौ। धर्मज्ञो मुनिश्रेष्ठः प्रथममुपविश्यासीनं प्राञ्जलिं धर्मकोविदं राममुवाच। अग्निं हुत्वा अर्घ्यं प्रदायातिथिं प्रतिपूजयेत्+। राम! अन्यथा कुर्वन् तपस्वी दुःसाक्षीव परे लोके स्वानि मांसानि भक्षयेत्। सर्वलोकस्य राजा धर्मचारी महारथो मान्यश्च भवान् प्रियातिथिः प्राप्तः। एवमुक्त्वा राघवं फलैर्मूलैः पुष्पैरन्यैश्च यथाभिलषितं संपूज्य ततः पुनरेवाब्रवीत्। पुरुषोत्तम! हेमरत्नविभूषितं दिव्यं महदिदं चापं वैष्णवं विश्वकर्मणा निर्मितम्। सूर्यसंकाशोऽमोघोऽयं शरोत्तमो ब्रह्मदत्तः। अक्षयसायकौ निशितैर्ज्वलद्भिः पावकैरिव बाणैः संपूर्णौ तूणीरौ मम महेन्द्रेण दत्तौ। कनककोशः कनकविभूषितोऽयमसिश्च महेन्द्रेण दत्तः। पुरा विष्णुः संख्येऽनेन धनुषा महासुरान् हत्वा दिवौकसां दीप्तां श्रियं पुनः संपादितवान्। हे मानद! तद् धनुः तौ तूणीरौ शरं खड्गं च वज्रधरो वज्रमिव जयाय प्रतिगृह्णीष्व। इति भगवानगस्त्यः सर्वं तद वरायुधं रामाय दत्त्वा पुनरब्रवीत्।

## १२

राम! लक्ष्मण! भद्रमस्तु। सीतया सह मामभिवादयितुं प्राप्तौ स्थः। प्रीतोऽस्मि। अध्वश्रमेण भवन्तौ खिन्नौ। जनकात्मजा च

---

+ पङ्क्तिरग्राह्या। अग्निं हुत्वा प्रदायार्घ्यमतिथिं प्रतिपूजयेत्।

विश्रान्तिमपेक्षते। सुकुमारी दुःखैरबाधितैषा भर्तृस्नेहप्रचोदिता प्राज्यदोषं वनं प्राप्ता। राम! एषा यथेह रमते तथा कुरु। वने त्वामनुगच्छन्ती दुष्करं कृतवती। आ सृष्टेरेषा स्त्रीणां प्रकृतिर्यत् ताः सुखस्थितं पतिमनुरजन्ति कष्टस्थितं त्यजन्ति च। योषितस्तटितां चञ्चलतां शस्त्राणां तीक्ष्णतां गरुडस्यानिलस्य शीघ्रतां चानुगच्छन्ति। इयं सीता भवतो भार्या एतैर्दोषैर्विवर्जिता देव्यरुन्धतीवत् श्लाघ्या विशेषतः परिगणनीया च। अयं देशः अलंकृतो यत्र त्वं सीतया लक्ष्मणेन च सह वत्स्यसि। एवमुक्तो रामः संयताञ्जलिरवदत्। मम मे भार्याया भ्रातुश्च गुणैर्मुनिपुङ्गवः परितुष्यति। तस्मादहं धन्यः अनुगृहीतश्चास्मि। किन्तु यत्राश्रमपदं कृत्वा निरतः सुखं वसेयं सोदकं बहुवनं तं देशं मे व्यादिश। तद्वचनं श्रुत्वा मुनिश्रेष्ठो मुहूर्तं ध्यात्वाब्रवीत्। बहुमूलफलोदको बहुमृगः शोभितः पञ्चवटीति प्रसिद्धो देश इतो द्वियोजने दूरेऽस्ति। त्वं भार्यानुजयोः सह तत्र गत्वा आश्रमपदं कृत्वा यथोक्तं पितुर्वाक्यमनुपालयन् रंस्यसे। तवैष सर्वो वृत्तान्तस्तपसः प्रभावेण दशरथस्य स्नेहाच्च मम विदितः। तव हृदयस्थोऽभिप्रायो मया तपसा विज्ञातः। अतो मया सहेह तपोवने निवसेत्युक्त्वा सम्प्रति पञ्चवटीं गच्छेति त्वामहं वच्मि। स रम्यः श्लाघनीयो देश इतो नातिदूरे गोदावर्याः समीपेऽस्ति तत्र च मैथिली रंस्यते। स देशः प्राज्यमूलफलो नानाद्विजगणयुतो जनसंचारशून्यः पुण्यो रम्यश्च। सदारो भवानात्मपरिरक्षणे शक्तः। तत्र वसन् तापसान् पालयिष्यसि च। एतन्मधूकानां महद् वनमालक्ष्यते। अस्योत्तरेण न्यग्रोधाभिमुखं गन्तव्यम्। ततः स्थलमुपारुह्य गन्तव्यम्। पर्वतस्य समीपतः पञ्चवटीति ख्यातो

नित्यपुष्पितकाननो देशः प्राप्स्यते। एवमगस्त्येनोक्तो रामो लक्ष्मणेन सह तमृषिं सत्कृत्यामन्त्रयामास। तेनानुज्ञातौ पादाभिवन्दनं कृत्वा सीतया सह पञ्चवटीं जग्मतुः। चापौ गृहीत्वा तूणौ बद्ध्वा महर्षिणोपदिष्टेन मार्गेण पञ्चवटीं सीतया सह प्रजग्मतुः।

१३

पञ्चवटीं गच्छन् मार्गे रामो महाकायं भीमपराक्रमं गृध्रमाससाद। रामलक्ष्मणौ वने तं पक्षिणं दृष्ट्वा को भवानिति पृच्छन्तौ राक्षसं मेनाते। स पक्षी तौ मधुरया सौम्यया वाचा प्रीणयन्निवोवाच। वत्स! मामात्मनः पितुर्वयस्यं विद्धि। रामस्तं पितृसखं बुद्ध्वा पूजयामास। तस्य कुलं नाम च पप्रच्छ। ततो द्विजः सर्वप्राणिनामुत्पत्तिं स्वकुलमात्मानं चाचचक्षे। राम! पूर्वकाले ये प्रजापतयोऽभवन् तान् सर्वानादितः कथयामि। शृणु। तेषां प्रथमः कर्दमः। तदनन्तरो विकृतः। तृतीयः शेषः। ततः क्रमशः संश्रयो बहुपुत्रः स्थाणुर्मरीचिरत्रिः क्रतुः पुलस्त्यः अङ्गिराः प्रचेताः पुलहो दक्षो विवस्वानरिष्टनेम्यपरनामा कश्यपश्च*। तेषां कश्यपश्चरमः। प्रजापतेर्दक्षस्य षष्टिर्दुहितरो बभूवुः। तासामदितिं दितिं दनूं कालकां ताम्रां क्रोधवशां मनुमनलां चाष्टौ कश्यपः प्रतिजग्राह। ततः प्रीतः कश्यपस्ताः कन्याः पुनरब्रवीत्। त्रैलोक्यपोषकान् मत्समान् पुत्रान् जनयिष्यथ। अदितिर्दितिर्दनुः कालका च तन्मनसि चक्रुः। शेषा अमनसो बभूवुः। अदित्यामादित्या वसवो रुद्रा अश्विनौ च त्रयस्त्रिंशद् देवा जज्ञिरे। दितिर्यशस्विनो दैत्यान् पुत्रानजनयत्। सवनार्णवेयं वसुमती पुरा देवानां दैत्यानां**

* एवं महेश्वरतीर्थगोविन्दराजौ।

चासीत्। दनुर्हयग्रीवनामकं पुत्रमजनयत्। कालका नरकं कालकं च जनयामास। क्रौञ्चीं भासीं श्येनीं धृतराष्ट्रीं शुकीं च पञ्च कन्यास्ताम्रा सुषुवे। क्रौञ्ची उलूकान् भासी भासान् श्येनी श्येनान् गृध्रान् धृतराष्ट्री हंसान् कलहंसान् चक्रवाकांश्चाजनयन्। शुकी नतामजनयत्। नतायाः सुता विनता। क्रोधवशा मृगीं मृगमन्दां हरीं भद्रमदां मातङ्गीं शार्दूलीं श्वेतां सुरभीं सुरसां कद्रुकां च दश दुहितृर्व्यजनयत्। सर्वे मृगा मृग्या अपत्यम्। ऋक्षाः सृमराश्चमराश्च मृगमन्दाया अपत्यम्। भद्रमदा इरावतीं सुतामजनयत्। तस्याः पुत्रो महागज ऐरावतः। हर्याः सन्ततिः सिंहास्तरस्विनो+ वानराश्च। शार्दूली गोलाङ्गूलान् व्याघ्रांश्च पुत्रानजनयत्। मातङ्ग्या अपत्यं मातङ्गाः। श्वेता दिशागजान् सुतान्++ व्यजनयत्। सुरभिः रोहिणीं गन्धर्वीं च दुहितरौ व्यजनयत्। रोहिणी गा अजनयद्गन्धर्वी वाजिनश्च। सुरसा नागान् कद्रूः पन्नगांश्चाजनयत्। कश्यपपत्नी मनुर्ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्च मनुष्यान् पुत्रान् जनयामास। मुखाद् ब्राह्मणा उरसः क्षत्रिया ऊरुभ्यां वैश्याः पद्भ्यां शूद्राश्च जाता इति प्रसिद्धिः। अनला सुफलान् सर्वान् वृक्षान् व्यजनयत्। विनता शुक्या दौहित्री। कद्रूः सुरसायाः स्वसा। कद्रूः सर्पान् सहस्रं व्यजनयद् ये भूमिं धरन्ति। विनताया गरुडोऽरुणश्च द्वौ पुत्रौ। अहमरुणस्य पुत्रः। संपातिर्ममाग्रजः। श्येन्याः* पुत्रोऽहं नाम्ना जटायुः। सोऽहं यदीच्छसि ते निवासे सहायो भविष्यामि।

---

+Cr तपस्विनः। ग्राह्यः – तरस्विनः। ++Cr दिशागजं तु श्वेताक्षं श्वेता व्यजनयत् सुतम्। ग्राह्या – दिशागजांश्च काकुत्स्थ श्वेता व्यजनयत् सुतान्।

* इयं श्येनी ताम्रपुत्र्याः शेन्याः संततिपरम्परायामन्यतमा भवेत्।

त्वयि लक्ष्मणे च यातयोरहं सीतां रक्षिष्यामि। राघवस्तं जटायुषं प्रतिपूज्य मुदा परिष्वज्य च संनतोऽभवत्। जटायुषा पुनःपुनः संकथितं पितुः सखित्वं शुश्राव। ततो जटायुषा सह सीतालक्ष्मणसहितो रामः अग्निः शलभानिव रिपून् दिधक्षन् पञ्चवटीं जगाम।

## १४

ततो नानाविधैः क्रूरमृगैर्मृगैश्च संकुलां पञ्चवटीं गत्वा रामः सौमित्रिमुवाच। वयं महर्षिणा सूचितं देशमागताः स्मः। पुष्पितकाननोऽयं पञ्चवटीदेशः। काननं सर्वतः परिशीलय। निपुणोऽसि। कतमस्मिन् प्रदेशे न आश्रमः संमतो भवतीति विचारय। यत्र वैदेही त्वमहं च रमामहे वनसौन्दर्यं जलसौन्दर्यं च यत्र स्तः समिधः पुष्पाणि कुशा उदकं च यत्र सन्निहितानि सन्ति तादृशः संनिकृष्टजलस्थानो देशो दृश्यताम्। एवमुक्तो लक्ष्मणः संयताञ्जलिः सीतासमक्षं राममाह। राम! दीर्घायुषि त्वयि स्थिते सर्वदाहं ते परतन्त्रोऽस्मि। अतस्त्वमेव किञ्चनः रम्यं स्थलं निरूप्याश्रमस्तत्र क्रियतामिति मामादिश। लक्ष्मणस्य तेन वाक्येन सुप्रीतो रामो विमृश्य सर्वगुणान्वितं देशं निर्णिनाय। रमणीयं तं देशमाश्रमाय बाढं भवतीति वदन् तदुपरि परिक्राम्यन् रामो हस्तेन सौमित्रिं हस्ते गृहीत्वाब्रवीत्। सौम्य! पुष्पिततरुभिर्वृतोऽयं देशः समः शोभावांश्च। इह यथाविधि आश्रमपदं कर्तुमर्हसि। सूर्यसंकाशैः सुरभिगन्धिभिः पद्मैर्बहुभि शोभिता सरसी अदूरे दृश्यते। महर्षिणागस्त्येन यथाख्यातं तथा पुष्पितैस्तरुभिर्वृता हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता रम्यैः गोदावरी दृश्यते। मृगयूथब्याकीर्णां मयूरनादिता रम्याः प्रांशवो

बहुकन्दराः फुल्लैस्तरुभिरावृता गिरयो नातिदूरे न चासन्ने दृश्यन्ते। सौवर्णै राजतैस्ताम्रैर्धातुभिर्देशे देशे गवाक्षाकारयुताः पर्वताः परमभक्तिभिर्गजा इव भान्ति। सालतालतमालादिभि-र्नानावृक्षैरावृताश्च सन्ति। इदं स्थलं पुण्यं पवित्रं बहुमृग-पक्षिसंयुतं चास्ति। एतेन पक्षिणा सार्धमिह वत्स्यामः। रामेणैवमुक्तो लक्ष्मणो भ्रातुरचिरेणाश्रमं चकार। प्रथमं मृत्तिकया प्रदेशमुन्नतं चकार। ततः सुस्तम्भां दीर्घैर्मस्करैः कृताधारकाष्ठां पर्णशालां निर्ममौ। अनन्तरं गोदावर्यां स्नात्वा पुष्पाणि फलानि चादायाजगाम। पुष्पपूजां कृत्वा यथाशास्त्रं शान्तिकर्म निर्वर्त्य कृतं तदाश्रमपदं रामाय दर्शयामास। सीतया सह रामस्तं सुन्दरमाश्रमं दृष्ट्वा पर्णशालायां भृशं हर्षमवाप। संमोदेन लक्ष्मणं गाढं परिष्वज्यातिस्निग्धमिदं वचनमब्रवीत्। हे समर्थ लक्ष्मण! त्वया महत् कर्म कृतम्।प्रीतोऽस्मि। एतन्निमित्तं ते प्रदेयः परिष्वङ्गो मया कृतः। भावज्ञः कार्यज्ञो धर्मज्ञश्च त्वमसि। त्वया पुत्रेण न मे पिता मृतोऽस्ति। एवं लक्ष्मणमुक्त्वा रामो बहुफले तस्मिन् देशे सीतया लक्ष्मणेन च सह स्वर्गलोके देववत् कञ्चित्कालं सुखं न्यवसत्।

## १५

महात्मनि रामे तत्र वसति शरद् व्यपेता इष्ट ऋतुर्हेमन्तः प्रावर्तत। कदाचिद् रामः प्रभाते रम्यां गोदावरीं नदीं स्नातुं प्रययौ। भ्राता लक्ष्मणो विनीतः कलशहस्तः सीतया सहानुव्रजन् इदमब्रवीत्। प्रियंवद! येन कालेन संवत्सरः अलंकृत इवाभाति यस्ते प्रियः सोऽयं कालः संप्राप्तः। नीहारपरुषशरीरो जनः पृथिवी सस्यशालिनी+

+ Cr मालिनी। ग्राह्यः – शालिनी।

जलानि स्नानार्थमनुपभोग्यानि अग्निः सुखकरश्च। सन्तो नूतनधान्यभोजनपूर्वं नूतनाग्रयणपूजाभिः पितृदेवता अभ्यर्च्य सकाले कृताग्रयणकर्माणो विगतकल्मषाः संवृत्ताः। सुसंपन्नगोक्षीरा जनपदाः पूर्णकामाः सन्ति। महीपाला विजिगीषवो यात्रार्थं विचरन्ति। दक्षिणदिशमधिकं सेवमाने सूर्ये उत्तरा दिक् तिलकहीना स्त्रीव न शोभते। प्रकृत्या हिमसंपन्नः साम्प्रतं दूरसूर्यश्च हिमवान् गिरिः सुव्यक्तं यथार्थनामास्ति। मध्याह्ने स्पर्शतः सुखा दिवसा अत्यन्तसुखसंचाराः सन्ति। सूर्यः सुखकरः छाया जलानि च दुःखकराणि सन्ति। साम्प्रतं हिमध्वस्ता दिवसा मृदुसूर्याः सनीहाराः पटुशीताः समारुताश्च सन्ति। अरण्ये जन्तुसंचारो न दृश्यते। पुष्यमासाद् रात्रयो दीर्घतां नीताः। जना बहिर्न शेरते। रविसंक्रान्तसौभाग्यस्तुषारारुणधूसरमण्डलो निःश्वासान्ध आदर्श इव चन्द्रमा न प्रकाशते। पौर्णमास्यां तुषारमलिना ज्योत्स्ना न राजते। आतपश्यामा सीतेव लक्ष्यते न तु शोभते। प्रकृत्या शीतलस्पर्शः साम्प्रतं हिमव्याप्तः पश्चिमवायुः प्रातःकाले द्विगुणशीतलो वाति। बाष्पच्छन्नानि यवगोधूमवन्त्यरण्यानि सूर्येऽभ्युदिते नदद्भिः क्रौञ्चैः सारसैश्च शोभन्ते। कनकप्रभाः शालयः खर्जूरपुष्पाकृतिभिः पूर्णतण्डुलैः शिरोभिः किञ्चिदानम्राः शोभन्ते। तुषारबाष्पसंवृतैः किरणैः सूर्यो दूरमभ्युदितोऽपि चन्द्र इव लक्ष्यते। किञ्चिदरुणः किञ्चित्पाण्डुश्चातपः प्रातःकाले अप्रभावो मध्याह्ने स्पर्शसुखश्च क्षितौ शोभते। हिमनिपातेन किञ्चित्प्रक्लिन्नशाद्वला निविष्टतरुणातपा वनभूमिः शोभते। हिमक्लिन्नाः+ बाष्पतमसा आवृताः पुष्पहीना वनराजयः प्रसुप्ता

इव लक्ष्यन्ते। साम्प्रतं बाष्पसंछन्नजला रुतविज्ञेयसारसाः सरितो हिमार्द्रवालुकैस्तीरैर्भान्ति। तुषारपाताद् भास्करस्य मृदुत्वात् शैत्याच्च पर्वतशिखरस्थमपि जलं रसवदस्ति। हिमपातजर्जरितपद्माः++ शीर्णकेसरकर्णिका नालशेषाः कमलाकरा न भान्ति। अस्मिन् काले धर्मात्मा भरतो दुःखसमन्वितः त्वद्भक्त्या पुरे तपश्चरति। राज्यं मानं विविधान् बहून् भोगांश्च त्यक्त्वा तपस्वी नियताहारः शीते महीतले शेते। सोऽप्यस्यां वेलायां स्नानार्थमुद्यतो मन्त्रिभिर्वृतो नित्यं सरयूं नदीं नूनं प्रयाति। अत्यन्तसुखसंवृद्धः सुकुमारः सुखोचितो भरतः अपररात्रेषु कथंस्वित् सरयूमवगाहते? सुन्दरो वीरः श्यामो धर्मज्ञः सत्यवादी ह्रीनिषेधो* जितेन्द्रियः प्रियाभिभाषी च स विविधान् भोगान् संत्यज्य सर्वात्मना आर्यं त्वां श्रितः। वनस्थमपि त्वां तपश्चरणे अनुसरता महात्मना तव भ्रात्रा स्वर्गो जितः। मानवा न पितुः स्वभावं किन्तु मातुः स्वभावमनुवर्तन्ते इति ख्यातो लोकप्रवादो भरतेनान्यथा कृतः। यस्या भर्ता दशरथः साधुर्भरतः सुतः सा अम्बा कैकेयी तादृशी क्रूरशीला कथं नु अभवत्? धार्मिके लक्ष्मणे स्नेहादेवं ब्रुवति रामो जनन्यास्तं परिवाद-मसहमानोऽब्रवीत्। तात! मध्यमाम्बा कथञ्चन ते न गर्हितव्या। इक्ष्वाकुप्रभोर्भरतस्य तां कथामेव कुरु। यद्यपि मे बुद्धिर्वनवासे निश्चिता दृढव्रता च तथापि भरतवियोगाद् विचलति। इति दुःखितो रामो गोदावरीं नदीं प्राप्य सानुजः सीतया सहाभिषेकं

---

+ Cr पर्णैः। ग्राह्यः पद्मैः। * ह्रीनिषेधः ह्रिया अकृत्येभ्यो निवर्तनं यस्य स इति गोविन्दराजः। अयं पदबन्धो महाभारते च दृश्यते। भण्डारकरप्रति, सभा. ४९, २. विराट. १८.३०.

चकार। अथ ते सलिलैः पितॄन् दैवतानि च तर्पयित्वा उदितं सूर्यं देवताश्च श्रद्धया तुष्टुवुः। कृताभिषेकः सीतालक्ष्मणसहितो रामः कृताभिषेको नन्दीश्वरपार्वतीसहित ईशो रुद्र इव रराज।

१६

स्नानानन्तरं रामः सीता लक्ष्मणश्च स्वमाश्रमं जग्मुः। आश्रमे पौर्वाह्णिकं कर्म कृत्वा राम' पर्णशालामुपागमत्। सीतया सह पर्णशालायामासीनो रामश्चित्रानक्षत्रयुतश्चन्द्र इव विरराज। ततो लक्ष्मणेन सह संभाषते स्म। तदा काचिद् राक्षसी दैववशात् तत्राजगाम। रक्षसो रावणस्य भगिनी शूर्पणखा नाम सा त्रिदशोपमं राममासाद्य ददर्श। सिंहोरस्कं महाबाहुं पद्मपत्रनिभेक्षणं सुकुमारं महासत्त्वं समस्तराजलक्षणसमुपेतमिन्दीवरश्यामं मन्मथसदृशकान्तिं देवेन्द्रोपमं रामं दृष्ट्वा सा काममोहिता बभूव। सुमुखं रामं दुर्मुखी वृत्तमध्यं महोदरी विशालाक्षं विरूपाक्षी सुकेशं ताम्रमूर्धजा प्रियरूपं विरूपा सुस्वरं भैरवस्वना तरुणं दारुणा वृद्धा दक्षिणं वामभाषिणी न्यायवृत्तं सुदुर्वृत्ता राक्षसी विलोक्य मन्मथसमाविष्टोवाच। सभार्यः शरचापधरस्त्व जटी तापसरूपेण राक्षससेवितमिमं देशं किमर्थमागतः? राक्षस्य शूर्पणखया एवमुक्तो राम ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे। त्रिदशविक्रमो दशरथो नाम राजा आसीत्। अहं तस्याग्रज पुत्रो रामो नाम। अयं लक्ष्मणो नाम मे यवीयान् भ्रात मामनुव्रतः। विदेहदेशराजपुत्रीयं मम भार्या सीता नाम पितुर्मातुश्च नियोगान्नियमितो धर्ममनुसरन्निह वस्तुं वनमागतोऽस्मि त्वां वेदितुमिच्छामि। कथ्यताम्। का त्वं कस्य पुत्री चासि इह किंनिमित्तं त्वमागता वा तत्त्वतो ब्रूहि। तच्छ्रुत्वा मदनार्दित

शूर्पणखा अब्रवीत्। राम! यथार्थं कथयामि श्रूयताम्। अहं शूर्पणखा नाम कामरूपिणी राक्षसी सर्वभयंकरा एकेदमरण्यं विचरामि। बलीयान् वीरो रावणो नाम राक्षसेश्वरो मे भ्राता। सदा प्रवृद्धनिद्रो महाबलः कुम्भकर्णश्च मे भ्राता। धर्मात्मा विभीषणश्च मे भ्राता। स राक्षसप्रवृत्तिर्नास्ति। प्रख्यातवीर्यौ खरदूषणौ च मे भ्रातरौ। सर्वान् तानहमतिक्रान्ता स्वच्छन्दचारिणी चास्मि। प्रथमदर्शनात् पुरुषोत्तमं त्वां भर्तारं भावेन समुपेतास्मि। चिराय मे भर्ता भव। सीतया किं करिष्यसि? विकृता विरूपा चेयं सीता न ते सदृशी। अहमेवानुरूपा। मां भार्यारूपेण पश्य। विरूपामसतीं करालां निर्णतोदरीमिमां मानुषीं ते भ्रात्रा सह भक्षयिष्यामि। कान्त! ततः पर्वतशृङ्गाणि विविधानि वनानि च पश्यन् मया सह दण्डकान् विचरिष्यसि। इत्युक्तो वाक्यविशारदो रामः प्रहस्य तां राक्षसीमिदं वक्तुमारेभे।

## १७

कामपाशबद्धां शूर्पणखां रामः अनालोचितं स्मितपूर्वं मृदु वचनमुवाच। भवति! कृतदारोऽस्मि। इयं मम दयिता भार्या। त्वद्विधानां नारीणां ससपत्नता सुदुःखा। लक्ष्मणो नामैष मेऽनुजो भ्राता शीलवान् प्रियदर्शनः श्रीमान् वीर्यवानकृतदारश्चास्ति। अनूढोऽयं भार्यार्थी। तरुणः प्रियदर्शन एष रूपवत्यास्तेऽनुरूपो भर्ता भविष्यति। सुन्दरि! अर्कप्रभा मेरुं यथा तथैनं मम भ्रातरमसपत्ना भज। इति रामेण प्रोक्ता राक्षसी काममोहिता सहसा रामं विसृज्य लक्ष्मणमब्रवीत्। तवास्य रूपस्याहं परमसुन्दरी युक्ता भार्यास्मि। मया सह सुखं दण्डकान् विचरिष्यसि। राक्षस्या एवमुक्तो वाक्यकोविदो लक्ष्मणः स्मित्वा

शूर्पणखां युक्तियुक्तमुवाच। अहं पूज्यस्य भ्रातुर्विधेयोऽनुजः। सुन्दरी त्वं दासस्य मे भार्या भूत्वा दासी भवितुं कथमिच्छसि? विशालाक्षि! वरवर्णिनी त्वं समृद्धार्थस्यार्यस्य यवीयसी भार्या भूत्वा सिद्धार्था मुदिता भव। एष रामो विरूपां दुष्टां करालां निर्णतोदरीं वृद्धामेनां भार्यां परित्यज्य त्वामेव भजिष्यति। विचक्षणः को हि श्रेष्ठमिदं रूपं संत्यज्य मानुषीषु प्रेम कुर्यात्? इति लक्ष्मणेन प्रोक्ता विरूपा वक्रोदरी परिहासमजानन्ती सा तद् वचः सत्यं मेने पुनश्च राममुवाच। इमां दुष्टामवष्टभ्य त्वं मां न बहुमन्यसे। पश्यतस्तेऽद्येमां मानुषीं भक्षयिष्यामि। निःसपत्ना त्वया सह यथासुखं चरिष्यामि। अलातसदृशेक्षणा सुसंक्रुद्धा शूर्पणखा इत्युक्त्वा महोल्का रोहिणीमिव मृगशाबाक्षीं सीतामभ्यधावत्। महाबलो राम आपतन्तीं मृत्युपाशप्रतिमां तां निगृह्य ततः कुपितो लक्ष्मणमब्रवीत्। सौम्य! सौमित्रे! क्रूरैरनार्यैः कथञ्चन परिहासो न कार्यः। कथञ्चिज्जीवन्तीं सीतां पश्य। इमां दुष्टां विरूपामतिमत्तां राक्षसीं विरूपयितुमर्हसि। इत्युक्तो लक्ष्मणः क्रुद्धो रामस्य पार्श्वतः+ खड्गमुद्धृत्य तस्याः कर्णौ नासां च चिच्छेद। घोरा सा शूर्पणखा निकृत्तकर्णनासा उच्चैर्विनद्य यथागतं वनं प्रदुद्राव। विरूपा महाघोरा शोणितोक्षिता सा राक्षसी बाहू उद्यम्य प्रावृषि तोयद इव विविधान् नादान् नदन्ती गर्जन्ती महावनं प्रविवेश। ततः सा राक्षससंघसंवृतं जनस्थानगतमुग्रदर्शनं भ्रातरं खरमुपेत्य गगनादशनिवद् भूमौ पपात। परमभीता शोणितोक्षिता सा वनमागतं सभार्यं सलक्ष्मणं राममात्मनि विरूपणं च सर्वं शशंस।

---

+ Cr रामस्य पश्यतः। ग्राह्यः – रामस्य पार्श्वतः।

## १८

तथा पतितां विरूपां शोणितोक्षितां भगिनीं दृष्ट्वा राक्षसः खरः क्रोधसंतप्तः पप्रच्छ। बलविक्रमसंपन्ना कामगा कामरूपिणी अन्तकसमा त्वं केनेमामवस्थां नीता प्रत्यागतासि[+]? देवगन्धर्वमहर्षिषु कोऽसौ त्वामेवं विरूपितवान्? महेन्द्रं विना कोऽप्यन्यो लोके मम विप्रियं न कुर्यात्। यथा सारसः पक्षी सलिले मिश्रितं क्षीरं पिबति तथाहमद्य जीवितान्तकैर्मार्गणैस्तस्य प्राणानादास्ये। मया संख्ये निहतस्य शरसंकृत्तमर्मणस्तस्य सफेनं रुधिरं भूमिः पास्यति। रणे मया निहतस्य तस्य कायात् संगताः प्रहृष्टाः पक्षिणो मांसमुत्कृत्य भक्षयिष्यन्ति। अद्य मया रणेऽपकृष्टं तं कृपणं त्रातुं देवा गन्धर्वाः पिशाचा राक्षसाश्च न शक्ताः। शनैः संज्ञामुपलभ्य मे शंस। केन दुर्विनीतेन त्वं वने विक्रम्य निर्जितासि? इति भृशं क्रुद्धस्य भ्रातुर्वचः श्रुत्वा शूर्पणखा सबाष्पमिदमुवाच। तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ पद्मविशालनयनौ चीरकृष्णाजिनाम्बरौ गन्धर्वराजप्रतिमौ पार्थिवचिह्नधरौ तौ देवौ वा मानुषौ वा तर्कयितुं नोत्सहे। तौ मया दृष्टौ। तयोर्मध्ये तरुणी रूपसंपन्ना सर्वाभरणभूषिता नारी दृष्टा। तां स्त्रियं निमित्तीकृत्य ताभ्यामुभाभ्यामनाथेव दुष्टेवेमामवस्थां नीतास्मि। रणमूर्धनि हतयोस्तयोस्तस्याः कुटिलवृत्तायाश्च सफेनं रुधिरं पातुमिच्छामि। एष एव मे प्रथमः कामस्त्वया कृतोऽस्तु। आहवेऽहं तेषां रुधिरं पिबेयम्। इति तस्यामुक्तवत्यां क्रुद्धः खरो महाबलानन्तकोपमान् चतुर्दश राक्षसान् व्यादिदेश। शस्त्रसंपन्नौ चीरकृष्णाजिनाम्बरौ मानुषौ प्रमदया सह घोरं

---

+ Cr केनान्तकसमा गता। केनान्तकसमागता इति स पाठ्यः।

दण्डकारण्यं प्रविष्टौ। तौ तां दुर्वृत्तां च हत्वा प्रत्यागच्छत। मम भगिनी तेषां रक्तं पास्यति। राक्षसाः! तेजसा तौ शीघ्रं प्रमथ्य मम भगिन्या इष्टो मनोरथः क्षिप्रं संपाद्यताम्। इत्यादिष्टास्ते चतुर्दश राक्षसास्तया सार्धं वातेरिता मेघा इव तत्र जग्मुः*।

१९

ततो भयंकरा शूर्पणखा राघवाश्रममागम्य सीतया सह रामलक्ष्मणौ रक्षसामसूचयत्। राक्षसाश्च तान् ददृशुः। रामस्तान् राक्षसान् शूर्पणखां चागतान् दृष्ट्वा लक्ष्मणमुवाच। सौमित्रे! स्वल्पकालं सीतायाः समीपे तिष्ठ। राक्षसीमनुसृत्येहागतान् राक्षसान् हनिष्यामि। लक्ष्मणस्तथेत्युक्त्वा तत्र तस्थौ। रामः स्वर्णविभूषितं महच्चापं सज्यं कृत्वा तानि रक्षांसि प्राह। आवां दशरथस्य पुत्रौ भ्रातरौ रामलक्ष्मणौ सीतया सार्धं दुश्चरं दण्डकावनं प्रविष्टौ। फलमूलाशनौ दान्तौ तापसौ धर्मचारिणौ दण्डकारण्ये निवसावः। किमर्थं नौ बाधध्वे। युष्मान् पापात्मकान् महावने ऋषीणामपकारिणो हन्तुं तेषामेव नियोगेन सशरासनः प्राप्तोऽस्मि। यद्यभीताः स्थ अत्रैव तिष्ठत। मा निवर्तध्वम्+। यदि प्राणैर्वः प्रयोजनमस्ति तर्हि निवर्तध्वम्। तद् वचनं श्रुत्वा ब्रह्मघ्नाः शूलपाणयस्ते चतुर्दश राक्षसाः सुसंक्रुद्धाः संरक्तनयना घोरा हृष्टा++

---

* रामो दाक्षिणात्यान् वनवासिनो (राक्षसान्)हन्तुमेव अयोध्याया दण्डकारण्यं जगामेति केचनाधुनिका विमर्शका अभिप्रयन्ति। परन्तु अरण्यगमनानन्तरमेव तत्र मुनयो राक्षसैर्बाधिता इति रामेण ज्ञातम्। अरण्ये मुन्याश्रमेषु निवसता रामेण त्रयोदश संवत्सरा गमिताः। ततः शूर्पणखागमनादेव रामस्य राक्षसैः सह रणो बभूव। पश्चात् सीताहरणादेव स रणो विवर्धितः। रामायणयुद्धानि स्त्रीमूलकान्येव न तु जातिसंघर्षमूलकानि। + Cr नोपसर्पितुमर्हथ। ग्राह्यः – नोपावर्तितुमर्हथ। ++ Cr हृष्टादृष्टपराक्रमम्। हृष्टा दृष्टपराक्रमम् इति पाठ्यः

दृष्टपराक्रमं राममूचुः। अस्माकं भर्तुः खरस्य क्रोधमुत्पाद्याद्यास्माभिर्युधि हतस्त्वमेव प्राणान् हास्यसि। बहूनामस्माकमग्रतो रणे स्थातुमेकस्य ते का शक्तिः? आहवे योद्धुं किं पुनः? अस्मद्बाहुप्रयुक्तैः परिघैः शूलैः पट्टिसैश्च करधृतं धनुः पराक्रमं प्राणांश्च त्यक्ष्यसि। इत्युक्त्वा संरब्धास्ते राक्षसा उद्यतायुधा राममभिद्रुत्य तानि शूलानि तं प्रति चिक्षिपुः। रामस्तानि चतुर्दश शूलानि तावद्भिरेव काञ्चनभूषणैः शरैश्चिच्छेद। ततः पश्चात् शिलाशितान् सूर्यसन्निभान् चतुर्दश नाराचान् जग्राह। राक्षसान् लक्ष्यीकृत्य देवेन्द्रो वज्रानिव मुमोच। ते अन्तरिक्षे महोल्कानां तुल्यवर्चसो बभूवुः। ते रक्षसां वक्षांसि भित्त्वाशनिस्वना रुधिराप्लुता भूमौ विनिष्पेतुः। ते राक्षसा भिन्नहृदयाः शोणितार्द्राङ्गा विकृता विगतासवश्छिन्नमूला द्रुमा इव भूमौ निपेतुः। भूमौ पतितान् तान् दृष्ट्वा राक्षसी क्रोधोत्कटा परित्रस्ता भैरवं रवं व्यसृजत्। महानादं नदन्ती किञ्चित्संशुष्कशोणिता सनिर्यासा वल्लीव खरं जवादुपगम्य पुनरेव पपात। निखिलेन तेषां रक्षसां वधं शशंस।

## २०

खरः पुनः पतितां शूर्पणखां दृष्ट्वा अनर्थार्थमागतां तां व्यक्तया वाचा क्रोधादुवाच। मया त्वत्प्रियार्थमिदानीं रुधिराशनाः शूरास्ते राक्षसा विनिर्दिष्टाः। पुनः किमर्थं रुद्यते? ते भक्ता अनुरक्ता नित्यशो मम हिताश्च। ते सर्वदा घ्नन्ति। कदापि न हन्यन्ते। अवश्यं मम वचः कुर्वन्ति। यत्कृते हा नाथेति विनर्दन्ती पुनः सर्पवत् क्षितौ वेष्टसे तत् कारणं श्रोतुमिच्छामि। मयि नाथे स्थिते अनाथवत् किं नु विलपसि? उत्तिष्ठोत्तिष्ठ। मा भैषीः। वैक्लब्यं त्यज्यताम्। इत्येवमुक्ता खरेण परिसान्त्विता

शूर्पणखा सास्रे नयने विमृज्य भ्रातरं खरमब्रवीत्। भवता प्रेषिताश्चतुर्दश राक्षसा रामेण मर्मभेदिभिः शरैर्निहताः। क्षणेनैव भूमौ पतितान् महाबलान् तान् राक्षसान् रामस्य महत् कर्म च दृष्ट्वा मम महान् त्रासोऽभवत्। समुद्विग्ना विषण्णा च पुनस्त्वां शरणं प्राप्तास्मि। विषादनक्राध्युषिते परित्रासोर्मिमालिनि विपुले शोकसागरे मग्नां मां किं न त्रायसे? मामनुसृता राक्षसा रामेण हताः। मयि तेषु रक्षस्सु च यदि तेऽनुक्रोशोऽस्ति रामेण योद्धुं यदि शक्तिश्चास्ति तर्हि दण्डकारण्यनिलयं तं राक्षसकण्टकं रामं जहि। यदि राममद्य न हनिष्यसि तवाग्रतः प्राणांस्त्यक्ष्यामि। सचापस्य रामस्य प्रतिमुखे रणे स्थातुं त्वं न शक्त इति बुद्ध्यानुपश्यामि। त्वमशूरः शूरमानी मिथ्यारोपितविक्रमो यतो मानुषौ रामलक्ष्मणौ हन्तुं न शक्नोषि। निःसत्त्वस्याल्पवीर्यस्येह ते वासः किमर्थः? सहबान्धवस्त्वरितो जनस्थानादपयाहि। रामतेजोऽभिभूतस्त्वं क्षिप्रं विनशिष्यसि। स तेजःसमायुक्तः। तस्य भ्राता च महावीर्योऽस्ति येनाहं विरूपितास्मि।

## २१

शूर्पणख्या एवं रक्षसां मध्ये आधर्षितः शूरः खरः कठोरतरं वच उवाच। तवावमानेन संजातो ममातुलः क्रोधः पर्वणि समुद्राम्भ इव धारयितुमशक्यः। मानुषं क्षीणजीवितं रामं वीर्यान्न गणयामि। स राम आत्मदुश्चरितैर्हतोऽद्य प्राणान् विमोक्ष्यति। बाष्पः संह्रियताम्। संभ्रमश्च विमुच्यताम्। अहं सभ्रातरं रामं यमसादनं नयामि। अल्पायुषो रामस्याद्य मम परश्वधेन हतस्य भूपतितस्योष्णमरुणं रुधिरं पास्यसि। खरोक्तं वचः श्रुत्वा प्रहृष्टा शूर्पणखा मौर्ख्याद् राक्षसश्रेष्ठं भ्रातरं पुनः प्रशशंस। पूर्वं तया

तिरस्कृतः पुनः प्रशंसितः खरस्तदा दूषणं नाम सेनापतिमब्रवीत्। मम चित्तानुवर्तिनां भीमवेगानां समरेष्वनिवर्तिनां नीलजीमूतवर्णानां घोराणां क्रूरकर्मणां लोकहिंसाविहाराणां बलिनामुग्रतेजसां शार्दूलदर्पाणां महारथानां गर्वितानां चतुर्दशसहस्राणां रक्षसां युगपदुद्योगं कारय। मम रथं धनूंषि शरांश्चित्रान् खड्गान् विविधाः शिताः शक्तीश्च क्षिप्रमुपस्थापय। रणकोविदोऽहं दुर्विनीतस्य रामस्य वधार्थं महात्मनां रक्षसामग्रे निर्यातुमिच्छामि। इति वदति खरे दूषणः सूर्यवर्णं महारथं शबलैः सदश्वैर्युक्तमाचचक्षे। सर्वसंपन्नमलंकृतं* तं रथममर्षात् खर आरुरोह। भीमविक्रमा राक्षसा रथस्थं तं निशाम्य तं दूषणं च संपरिवार्य तस्थुः। रथस्थः खरस्तदा कवचायुधधरान् राक्षसान् निर्यातुमब्रवीत्। ततस्तद् राक्षससैन्यं जनस्थानान्महानादेन निर्जगाम। मुद्गरपट्टिसगदाखड्गधनुर्बाणादीनि बहून्यायुधानि ते गृहीत्वा निर्याताः। तेषां किञ्चिदनन्तरं खरो रथेन जगाम। खरस्य मतिं बुद्ध्वा सारथिस्तस्य रथं चालयामास। दिशः शब्देन पूरयन् खरस्य रथश्चोदितः। प्रवृद्धमन्युः खरस्वनः खरो रिपोर्वधार्थं त्वरितः अन्तक इव महाश्मवर्षवान् मेघ इव उन्नदन् सारथिमचूचुदत्।

## २२

गर्दभधूसरवर्णस्तुमुलो महामेघः प्रयाते तस्मिन्घोरे बले अशिवं शोणितोदकमभ्यवर्षत्। रथयुक्ता महाजवास्तस्य तुरगा राजमार्गे पुष्पचिते समे देशे अकस्मात् स्रस्तपादा बभूवुः। दिवाकरं परितः श्यामं रुधिरवर्णपर्यन्तमलातचक्रप्रतिमं परिवेषणं बभूव। महाकायः सुदारुणो गृध्रो हैमदण्डं समुच्छ्रितं ध्वजमुपागम्य तदग्रे तस्थौ।

* श्लोकाः १४–१६ संक्षिप्ताः।

रस्वना मांसादा मृगाः पक्षिणश्च जनस्थानसमीपे समागम्य
विधान् विस्वरांश्चक्रुः। घोरा महास्वना यातुधानानामशिवाः
वाः प्रदीप्तायां दिशि भैरवस्वनं व्याजह्रुः। प्रभिन्नगिरिसंकाशाः
णिततुल्यतोयधारिणो भीमा वलाहका आकाशं व्याप्यानवकाशं
क्रुः। घोरमुद्धतं रोमहर्षणं तिमिरं बभूव। दिशो विदिशो वापि
क्तं न चकाशिरे। कालं विना क्षतजार्द्रपटसमानवर्णा सन्ध्या
गै। घोरा मृगाः खगाश्च खराभिमुखं नेदुः। युद्धे
त्याशुभकरा घोरनिदर्शनाः शिवा ज्वालोद्गारिभिराननैर्बलस्याभिमुखं
ः। भास्करान्तिके परिघाकारः कबन्धो ददृशे। महाग्रहो
रनमावास्यायां सूर्यं जग्राह। मारुतः शीघ्रं प्रववौ। दिवाकरो
प्रभो बभूव। खद्योतसमप्रभास्तारा विना रात्रिमुत्पेतुः। सरांसि
ीनमीनजलविहगानि वृक्षाः पुष्पफलविनाभूताश्च तस्मिन् क्षणे
वुः। विना वातं जलधरारुणो रेणुरुद्धूतः। शारिका
चीकूचीति वाश्यन्ते स्म। घोरदर्शनाः सनिर्घाता उल्काश्चापि
ेतुः। सशैलवनकानना सर्वा मही प्रचचाल। रथे नदतः
स्य सव्यो भुजः प्राकम्पत। स्वरोऽवसक्तः। सर्वतः
यतस्तस्य दृष्टिः सास्रा समपद्यत। शिरसि वेदना जाता।
तु मोहान्न न्यवर्तत। खरस्तदोत्थितान् रोमहर्षणान् तान्
ोत्पातान् समीक्ष्य प्रहसन् सर्वान् राक्षसानुवाच। उत्थितान्
दर्शनानिमान् महोत्पातान् सर्वानहं वीर्याद् बलवान् दुर्बलानिव
चिन्तयामि। तारा अपि **तीक्ष्णैः शरैर्नभस्तलात्** पातयेयम्।
**द्धो मृत्युमपि मरणधर्मेण** योजयेयम्। **बलगर्वितं रामं तस्य**
रं लक्ष्मणं च तीक्ष्णैः शरैरहत्वा न निवर्ते। यस्यां
लक्ष्मणो विपरीतं प्रवर्तितौ सा मे भगिनी तयो रुधिरं पीत्वा

सकामा भवतु। संयुगेषु मे क्वचित् पराजयो न प्राप्तपूर्वः। एतद् युष्माकं प्रत्यक्षम्। अहमनृतं न कथयामि। क्रुद्धो मत्तैरावतयायिनं वज्रहस्तं देवराजमपि युद्धे हन्याम्। किं पुनस्तौ मानुषौ। मृत्युपाशबद्धा सा महाचमूस्तस्य राक्षसस्य गर्जितं श्रुत्वातुलं प्रहर्षं लेभे। महात्मान ऋषयो गन्धर्वाः सिद्धाश्चारणैः सह युद्धदर्शनकाङ्क्षिणः समेयुः। पुण्यकर्माणस्ते समेत्य गोब्राह्मणेभ्यः सर्वेभ्यः सज्जनेभ्यश्च स्वस्ति भवतु इत्यन्योन्यमूचुः। महाविष्णुर्युद्धे सर्वानसुरश्रेष्ठानिव रामः सर्वान् राक्षसान् जयतु। इति बहु भाषमाणा महर्षयो गतायुषां राक्षसानां सेनां ददृशुः। खरो वेगाद् रथेन विनिस्सृतः। तं दृष्ट्वा राक्षसाश्च विनिःसृताः। श्येनगामी पृथुग्रीवो यज्ञशत्रुर्विहंगमो दुर्जयः करवीराक्षः परुषः कालकार्मुको मेघमाली महामाली सर्पास्यो रुधिराशन एते द्वादश महावीराः खरमभितः प्रतस्थुः। महाकपालः स्थूलाक्षः प्रमाथी त्रिशिराश्चैते चत्वारः सेनाग्र्या दूषणं पृष्ठतो ययुः। इत्थं सा राक्षससेना ग्रहाणां पङ्क्तिश्चन्द्रसूर्याविव रामलक्ष्मणौ शीघ्रमभ्युपेयाय।

## २३

खरपराक्रमे खरे आश्रमं प्रति याते भ्रात्रा सह राम उत्पातान् तानेव ददर्श लक्ष्मणं चाह। लक्ष्मण! सर्वभूतसंहारसूचकान् सर्वराक्षसान् संहर्तुं समुत्थितानिमान् महोत्पातान् पश्य। रुधिरधारा वर्षन्तः खरस्वनान् विसृजन्तः परुषा गर्दभधूसरा मेघा व्योम्नि विवर्तन्ते। युद्धाभिनन्दिनः सर्वे मम शराः सधूमाः। रुक्मपृष्ठानि चापानि च विवेष्टन्ते। इह वनचारिणः पक्षिणो यथा कूजन्ति

भविष्यति। संशयो नास्ति। मुहुर्मुहुः स्फुरन् मे बाहुः सन्निकर्षेऽस्माकं जयं शत्रोः पराजयं चाख्याति। तव वक्त्रं सुप्रभं प्रसन्नं च लक्ष्यते। युद्धार्थमुद्यतानां येषां वदनं निष्प्रभं भवति तेषामायुःपरिक्षयो भवति। आपदं शङ्कमानेन शुभमिच्छता विपश्चिता पुरुषेणानागतविधानं कर्तव्यम्। तस्माद् वैदेहीं गृहीत्वा धनुर्बाणधरो दुर्गां पादपसंकुलां शैलगुहामाश्रयस्व। अहमेव राक्षसान् हनिष्यामीत्येवं वदता त्वयेदं वाक्यं प्रतिकूलयितुं नेच्छामि। वत्स! मम पादाभ्यां शापितोऽसि। गम्यताम्। मा चिरम्। एवमुक्तो लक्ष्मणस्तथा चकार। तथा कृते रामो युक्तं कृतमित्युक्त्वा कवचं दधार। अग्निनिकाशेन तेन कवचेन विभूषितो रामस्तिमिरे उत्थितो विधूमोऽग्निरिव बभौ। रामो महच्चापमुद्यम्य ज्यास्वनैर्दिशः पूरयन् तत्रावतस्थे। ततो देवा गन्धर्वाः सिद्धाश्चारणा गुह्यकाश्च परमसंत्रस्ताः परस्परमूचुः। भीमकर्मणां रक्षसां चतुर्दश सहस्राणि सन्ति धर्मात्मा राम एकश्च। कथं युद्धं भविष्यति? ततो गम्भीरनिस्वनं घोरवर्मायुधध्वजं यातुधानानामनीकं समन्तात् प्रत्यदृश्यत। सिंहनादान् विसृजतामन्योन्यमभिगर्जतां चापानि विस्फारयतामभीक्ष्णं जृम्भमाणानां विप्रघुष्टस्वनानां दुन्दुभींश्च निघ्नतां तेषां सुतुमुलः शब्दस्तद् वनं पूरयामास। तेन शब्देन संत्रस्ता वनचारिणः श्वापदा यत्र निःशब्दं तत्र दुद्रुवुः। पृष्ठतो न व्यलोकयन्। तन्महावेगं धृतनानाप्रहरणं गम्भीरं सागरोपममनीकं रामं समुपासर्पत्। रणपण्डितो रामः सर्वतश्चक्षुश्चारयन् युद्धाभिमुखमुत्थितं तत् खरसैन्यं ददर्श। भीमं धनुर्वितत्य तूण्याः सायकानुद्धृत्य सर्वरक्षसां वधार्थं तीव्रं क्रोधमाहारयत्। क्रोधेन

ज्वलन् रामो युगान्ताग्निरिव दुष्प्रेक्षो बभूव। तेजसाविष्टं तं दृष्ट्वा वनदेवताः प्राव्यथन्त। तदा क्रुद्धस्य रामस्य रूपं दक्षयज्ञं हन्तुमुद्यतस्य पिनाकिन इव ददृशे।

## २४

पुरःसरैः सहाश्रममागम्य खरः अवष्टब्धधन्वानं क्रुद्धं रामं ददर्श। खरनिःस्वनं सशरं चापमुद्यम्य रामस्याभिमुखं चोद्यतामिति सूतमचोदयत्। सूतो रथं रामसमीपमचोदयत्। निष्पतितं खरं दृष्ट्वा राक्षसमन्त्रिणो महानादं नर्दन्तस्तं पर्यवारयन्। तेषां रक्षसां मध्ये खरस्ताराणां मध्ये उदितः कुज इव बभूव। ततः सर्वे निशाचरा रामं नानाविधैः शस्त्रैरभ्यवर्षन्। मुद्गरपट्टिसशूलाद्यायुधै रामं निजघ्नुः। मेघतुल्यास्ते राममभिद्रुत्य शरवर्षाणि व्यसृजन्। रामो घोरै रक्षसां गणैर्महादेवस्तत्तिथिषु स्वानुचराणां गणैरिव परिवृतो बभूव। स यातुधानैर्मुक्तानि शस्त्राणि सागरो नद्योघानिव विशिखैः प्रतिजग्राह। घोरैः प्रहरणैर्भिन्नगात्रोऽपि रामः प्रदीप्तैर्बहुभिर्वज्रैर्महाचल इव न विव्यथे। विद्धः सर्वगात्रेषु क्षतजादिग्धो रामः संध्यामेघैरावृतो दिवाकर इवासीत्। तदा बहुभिः सहस्रैः समावृतमेकं रामं दृष्ट्वा देवा गन्धर्वाः सिद्धाः परमर्षयश्च विषेदुः। ततो मण्डलीकृतकोदण्डो रामः शतशः सहस्रशश्च निशितान् बाणान् ससर्ज। दुर्निवारान् दुर्विषहान् कालदण्डोपमान् कङ्कपत्रानजिह्मगान् लीलया मुमोच। ते शराः कालपाशा इव शत्रूणां प्राणानाददुः। राक्षसदेहान् भित्त्वा रुधिराप्लुता अन्तरिक्षगतास्ते शरा दीप्ताग्निसमतेजसो रेजुः। रक्षःप्राणापहारिणोऽसंख्येयाः शरा रामस्य चापमण्डलान्निष्पेतुः। तैः शरै रामः शत्रूणामायुधानि कवचानि शरीराङ्गानि च शतशः

सहस्रशश्चिच्छेद। ततो नाराचैर्बहुविधैः शरैश्च भिद्यमाना राक्षसा भीममार्तस्वरं चक्रुः। रामबाणैस्तत्सैन्यं शुष्कं वनमग्निनेव पीडितमभवत्। राक्षसाः केचिद् बहून्यायुधानि रामे चिक्षिपुः। राघवस्तानि बाणैरावार्य तेषां शिरांसि चिच्छेद प्राणांश्च जहार। अवशिष्टा राक्षसाः खरं शरणं ययुः। तान् सर्वान् पुनरादाय क्रुद्धो दूषणो रुद्रमन्तक इव राममभ्यधावत्। सालतालशिलायुधास्ते दूषणाश्रयनिर्भया राममभ्यधावन्। तदा तद् घोरं युद्धमद्भुतं बभूव।

## २५

रामः शिलानां द्रुमाणां च तद् वर्षं तीक्ष्णैः सायकैः प्रतिजग्राह। स निमीलित ऋषभ इव तद् वर्षं प्रतिगृह्य सर्वरक्षसां वधार्थं परं क्रोधं भेजे। दूषणेन सह सर्वं सैन्यं शरैरभ्यकिरत्। तेन सेनापतिः शत्रुदूषणो दूषणः क्रुद्धो गिरिशृङ्गाभं रोमहर्षणं परिघं गृहीत्वा राममभ्यपतत्। अभिपततो दूषणस्य भुजौ रामः शरद्वयेन चिच्छेद। छिन्नहस्तस्य दूषणस्य महाकारः परिघः शक्रध्वज इव पपात। कृत्तकरद्वयो दूषणो भुग्नविषाणद्वयो मनस्वी महागज इव भुवि पपात। निहतं भूपतितं दूषणं दृष्ट्वा सर्वाणि भूतानि साधु साध्विति राममपूजयन्। एतस्मिन्नन्तरे क्रुद्धा महाकपालः स्थूलाक्षः प्रमाथी च सेनानायका मृत्युपाशबद्धा युगपद् राममभ्यद्रवन्। महाकपालो महाशूलं स्थूलाक्षः पट्टिशं प्रमाथी परश्वधं च गृहीत्वा जग्मुः। रामस्तान् संप्राप्तानतिथीनिव दृष्ट्वैव सायकैः प्रतिजग्राह। स महाकपालस्य शिरश्चिच्छेद। प्रमाथिनं बहुबाणैः प्रममाथ। स्थूलाक्षस्याक्षिणी तीक्ष्णैः सायकैः पूरयामास येन स छिन्नद्रुमवत् पपात। ततः सर्वं सैन्यं शरैर्जघान। ते शरा वज्रा महाद्रुमानिव

सैन्यान् निजघ्नुः। राक्षसानां शतं शतेन कर्णिबाणैः सहस्रं बाणसहस्रेण च रामोऽहनत्। भिन्नाभरणाश्छिन्नधन्वानः शोणितादिग्धा राक्षसा धरण्यां निपेतुः। तेषां मुक्तकेशैः शरीरैर्महावेदिः कुशैरिव वसुधा आस्तीर्णा बभूव। क्षणेन राक्षसेषु हतेषु मांसशोणितकर्दमं वनं निरयप्रख्यं बभूव। भीमकर्मणां रक्षसां चतुर्दश सहस्राणि पदातिना मानुषेणैकेन रामेण जघ्निरे। राक्षससैन्यस्य सर्वस्य खरस्त्रिशिराश्च शिष्टौ। तद् दृष्ट्वा खर उद्यताशनिरिन्द्र इव रथेन रामं समाससाद।

## २६

रामाभिमुखं प्रयातस्य खरस्य समीपं गत्वा सेनापतिस्त्रिशिरा इदमुवाच। मां नियोजय। साहसात् संनिवर्तस्व। रामं संयुगे विनिपातितं पश्य। सर्वराक्षसहन्तव्यं राममहं हनिष्यामि। एवमायुधमालभ्य प्रतिजानामि। अहं वां तस्य मृत्युर्भवेयं स वा मम मृत्युर्भवेत्। त्वं रणोत्साहमुत्सृज्य किञ्चित्कालं प्रेक्षको निर्णेता भव। रामे हते प्रहृष्टो जनस्थानं प्रयास्यसि अथवा मयि हते रामं संयुगायोपयास्यसि। एवं खरो मृत्युलोभात् त्रिशिरसा प्रार्थितः। गच्छ युध्यस्वेति खरेणानुज्ञातस्त्रिशिरा राघवाभिमुखो ययौ। त्रिशिरा वाजियुक्तेन रथेन त्रिशृङ्गः पर्वत इव राममभ्यद्रवत्। स महामेघ इव शरधारासमूहानुत्सृजन् जलक्लिन्नस्य दुन्दुभेः+ सदृशं नादं व्यसृजत्। आगच्छन्तं त्रिशिरसं प्रेक्ष्य रामः शितान् सायकान् धनुषा विधून्वन् प्रतिजग्राह। तयोर्महान् संप्रहारो बलिनोः सिंहकुञ्जरयोरिव बभूव। त्रिशिरसा त्रिभिर्बाणैर्ललाटे ताडितो रामः कुपित इदमब्रवीत्।

---

+ Cr जलार्द्रस्येव दुन्दुभेः। ग्राह्यः – जलक्लिन्नस्य दुन्दुभेः।

अहो पराक्रमिणः शूरस्य राक्षसस्येदृशं बलम्। तव शरैः पुष्पैरिव ललाटे परिक्षतोऽस्मि। ममापि चापच्युतान् शरान् प्रतिगृह्णीष्व। इत्युक्त्वा चतुर्दश निशितशरान् त्रिशिरसो वक्षसि निजघान। चतुर्भिस्तस्य हयान् न्यपातयत्। अष्टभिः सूतं हत्वा एकेन तस्य ध्वजं चिच्छेद। ततो भग्नरथादुत्पतन्तं तं बाणैर्हृदये ताडयामास। स जडो बभूव। ततस्त्रिभिः शरैस्तस्य त्रीणि शिरांसि रामोऽखण्डयत्। प्रथमं शिरांसि पश्चात् स त्रिशिराश्च न्यपतन्। हते त्रिशिरसि व्याघ्रत्रस्ता मृगा इव राक्षसा दुद्रुवुः। खरस्तान् निवर्त्य राहुश्चन्द्रमसमिव राममभ्ययुज्यत।

## २७

दूषणत्रिशिरसोर्हतयो रामस्य पराक्रमं दृष्ट्वा खरस्य च त्रासो बभूव। तयोः सह सर्वं बलमेकेन रामेण हतं दृष्ट्वा नमुचिरिन्द्रमिव खरो राममाससाद। खरो नाराचान् रामाय चिक्षेप। स रथेन बहुमार्गान् संचरन् बाणान् प्रयुज्य दिशः पूरयामास। रामश्च वृष्टिमान् पर्जन्य इव नभो बाणैः पूरयामास। खररामविसृष्टैः शरैराकाशो निरवकाशः समजनि। शरजालावृतः सूर्यो न प्रकाशते स्म। तदा तोत्रैर्महाद्विपमिव रामं खरः शरैराजघान। रथस्थः स तदा पाशहस्तो यम इव सर्वैर्दृष्टः। तथापि सिंहः क्षुद्रमृगमिव तं पश्यन् रामो नोद्विविजे। तदा पतङ्गः पावकमिव खरो राममुपजगाम। पाणिलाघवं दर्शयन् खरो रामस्य धनुः शरेण चिच्छेद। पुनः सप्तभिः शरैर्वर्मणि निजघान। तथा प्रहतं रामस्य कवचं भूमौ पपात। सर्वगात्रेषु शरैस्ताडितो रामो विधूमः पावक इव रराज। तदा महर्षिणा दत्तं वैष्णवं धनू रामः सज्यं चक्रे। स शरैः खरस्य ध्वजं

चिच्छेद। बहुधा विच्छिन्नः स दर्शनीयः काञ्चनो ध्वजो देवतानामाज्ञया धरणीं गतः सूर्य इव ददृशे। तदा खरश्चतुर्भिर्बाणै रामं हृदि विव्याध। रुधिरसिक्ताङ्गो रामो रुष्टो बभूव। तदा सः अभिलक्षितान् षट् शरान् खरे प्रायुङ्क्त। एकेन शिरसि द्वाभ्यां बाह्वोस्त्रिभिर्वक्षसि च प्रजघान। ततस्त्रयोदश नाराचान् मुमोच। एकेन युगं चतुर्भिश्चतुरो हयान् षष्ठेन खरस्य सारथेः शिरश्च चिच्छेद। पुनस्तस्य रथाङ्गानि धनुश्च छित्त्वा खरं च बिभेद। विरथो भग्नधन्वा खरो गदापाणिर्भूमौ तस्थौ। रामस्य तत् कर्म देवा महर्षयश्च पूजयामासुः।

## २८

विरथं गदापाणिमवस्थितं खरमापाततो मृदूनि पर्यवसाने परुषाणि वचनानि रामः प्राह। गजाश्वरथसंकुलसैन्याधिपतिर्भूत्वा त्वं सर्वलोकजुगुप्सितं कर्माकरोः। यो भूतानां दुःखं करोति स पापकर्मकृन्नृशंसस्त्रयाणां लोकानामीश्वरोऽपि न तिष्ठति। राक्षस! लोकविरुद्धं कर्म कुर्वाणं क्रूरं सर्वो जन आगतं दुष्टसर्पमिव हन्ति। यो लोभात् कामाद्* वा पापानि कुर्वाणो न बुध्यते स करकखादिनी रक्तपुच्छिकेव** नश्यति। दण्डकारण्ये वसतो धर्मचारिणो महाभागान् तापसान् हत्वा किं नु फलं प्राप्स्यसि? पापकर्माणो लोकजुगुप्सिताः क्रूरा ऐश्वर्यं प्राप्य शीर्णमूला द्रुमा इव चिरं न तिष्ठन्ति। काले पर्यागते जन्तुः पापस्य कर्मणो घोरं फलं द्रुमा आर्तवं पुष्पमिवावश्यं लभन्ते। राक्षस! लोके पापानां कर्मणां फलं भुक्तानां सविषाणामन्नानामिवाचिरात्

---

* प्राप्तस्याधिकवाञ्छा लोभः। अप्राप्तस्य वाञ्छा कामः।

** रक्तपुच्छिका करकं खादित्वा म्रियते इति विश्वासः।

प्राप्यते। घोरं पापमाचरतां लोकस्याप्रियमिच्छतां प्राणान् नाशयितुं राजाहं मुनिभिर्नियुक्तोऽस्मि। अद्य मया मुक्ताः शराः पन्नगा वल्मीकमिव त्वां विदार्य निपतिष्यन्ति। त्वया दण्डकारण्ये भक्षितान् धर्मचारिणो मुनीनद्य संख्ये निहतः ससैन्योऽनुगमिष्यसि। पुरा त्वया हिंसिताः परमर्षयो विमानस्था अद्य बाणैर्निहतं नरकस्थं त्वां पश्यन्तु। कुलाधम! त्वं यथाकामं प्रहर प्रयतस्व च। अद्य ते शिरस्तालफलवत् पातयिष्यामि। रामेणैवमुक्तः खरो महाकोपेन प्रहसन् प्रत्युवाच। राम! युद्धे सामान्यान् राक्षसान् हत्वा अप्रशस्यमात्मानमात्मना कथं प्रशंससि? विक्रान्ता बलवन्तो वा नरर्षभाः स्वेन तेजसा गर्वन्तः किञ्चिन्न कथयन्ति। अविनीताः क्षत्रियाधमास्तु त्वद्वद् विकत्थन्ते। मृत्युकाले संप्राप्ते वीरः कः समरे कुलं व्यपदिशन् अप्रस्तुते समये स्वयमात्मानं स्तौति? स्वर्णवद् भासमानो दर्भाग्निर्यथा क्षणान्तरे नश्यति तथा कत्थनेन त्वया लघुत्वं सर्वथा प्रदर्शितम्। गदाधरमिह तिष्ठन्तं धातुभिश्चितं धराधरं पर्वतमिव किं मां न पश्यसि?+ पाशहस्तो यम इव गदापाणिरहं रणे ते त्रयाणां लोकानां च प्राणान् हन्तुं पर्याप्तोऽस्मि। त्वामुद्दिश्य बहु वक्तव्यमस्ति। परन्तु न वक्ष्यामि। सविता अस्तं गच्छेत् ततो युद्धविघ्नो भवेत्। त्वया राक्षसानां चतुर्दश सहस्राणि हतानि। त्वां हत्वा तेषामश्रुप्रमार्जनं करोमि। इत्युक्त्वा प्रदीप्ताशनिवत् खरो गदां रामे चिक्षेप। सा गदा वृक्षान् गुल्मांश्च भस्मीकृत्य राममुपजगाम। तामन्तरिक्षे एव रामश्चिच्छेद। मन्त्रैर्निपतिता व्यालीव सा गदा विशीर्णा महीतले पपात।

---

+ Cr न तु। ग्राह्यः – ननु।

# २९

तां गदां बाणैर्भित्त्वा स्मयमानो रामो विभ्रान्तं खरमुवाच। राक्षसाधम! तवैतद् बलसर्वस्वं दर्शितम्। मत्तः शक्तिहीनतरस्त्वं वृथा गर्जसि। बाणविनिर्भिन्नैषा गदा वाक्छूरस्य ते प्रत्ययघातिनी भूमितलं गता। विनष्टानां राक्षसानामश्रुप्रमार्जनमहं करोमीति त्वया यदुक्तं तदपि ते वचो मिथ्या। क्षुद्रस्य मिथ्यावृत्तस्य रक्षसस्ते प्राणानहं गरुत्मानमृतमिव हरिष्यामि। अद्य मया विदारितस्य ते रक्तं भूमिः पास्यति। पांसुरूषितसर्वाङ्गः स्रस्तन्यस्तभुजद्वयो दुर्लभां प्रमदामिव गां समालिङ्ग्य स्वप्स्यसि। दीर्घनिद्रे त्वयि राक्षसाधमे शयिते इमे दण्डकारण्यप्रदेशाः शरण्यरहितानां मुनीनां शरण्या भविष्यन्ति। जनस्थाने सर्वेषां राक्षसानां स्थानेषु मया हतेषु निर्भया मुनयः सर्वत्र वने विचरिष्यन्ति। अन्यभयावहा राक्षस्यो हतबान्धवा बाष्पार्द्रवदना भयाद् दीना अद्य विप्रसरिष्यन्ति। तव सदृशकुले जातास्त्वामीदृशं भर्तारं प्राप्तास्ते पत्न्योऽद्य शोकं ज्ञास्यन्ति। क्रूर! क्षुद्र! नित्यं मुनिकण्टक! त्वन्निमित्तेन शङ्कितैर्मुनिभिर्हविरग्नौ पात्यते। एवं ब्रुवाणं रामं खरो रोषात् परुषमेवमुवाच। भयसमयेऽपि निर्भयस्त्वं दृढमवलिप्तोऽसि। मृत्युवश्यस्त्वं वाच्यावाच्यं न बुध्यसे। कालपाशपरिवृताः पुरुषा निरस्तषड्ज्ञानेन्द्रियाः कार्याकार्यं न जानन्ति। एवं राममुक्त्वा भ्रुकुटीं बद्ध्वा प्रहरणार्थमविदूरे महासालं ददर्श। तं समुत्क्षिप्य राममुद्दिश्य चिक्षेप हतस्त्वमिति चाब्रवीत्। रामस्तं बाणैश्छित्त्वा खरं हन्तुं रोषं चक्रे। जातस्वेदो रुष्टो रामो बाणानां सहस्रेण खरं निर्बिभेद। खरस्य देहाद् बहु रक्तं सुस्राव। स विह्वलः कृतः।

स शीघ्रं राममेवाभ्यद्रवत्। कृतास्त्रो राम आपततो रुधिराप्लुतात् संरब्धात् तस्मात् त्वरितपादविन्यासेन द्वित्रपदानि+ किञ्चिदपासर्पत्। ततः खरं हन्तुं रामः पावकसदृशं ब्रह्मदण्डतुल्यं शरं जग्राह। इन्द्रदत्तं तं शरं रामः सन्दधे मुमोच च। निर्घातसमनिःस्वनः स शरः खरस्योरसि पपात। शरदग्धः खरः श्वेतारण्ये रुद्रेण दग्धः अन्धकासुर इव भूमौ पपात। हतः खरो वज्रहतो वृत्र इव फेनहतो नमुचिरिव इन्द्राशनिहतो बल इव निपपात। ततः सर्वे राजर्षयः परमर्षयश्च संगता रामं सभाज्येदमब्रुवन्। एतदर्थमेव महेन्द्रः शरभङ्गाश्रममाजगाम। महर्षिभिरुपायेन त्वमिमं देशमानीतः। त्वया नः कार्यं कृतम्। महर्षयो दण्डकेषु सुखं धर्मं चरिष्यन्ति। एतस्मिन्नन्तरे सीतया सह लक्ष्मणो गिरिदुर्गाद् विनिष्क्रम्य संतोषेणाश्रमं संविवेश। विजयी रामो महर्षिभिः पूज्यमानो लक्ष्मणेनाभिवादित आश्रमं प्रविवेश। वैदेही शत्रुहन्तारं महर्षीणां सुखावहं भर्तारं दृष्ट्वा हृष्टा बभूव तं परिषष्वजे।

## ३०

ततः शूर्पणखा एकेन रामेण भीमकर्मणां रक्षसां चतुर्दशसहस्राणि खरदूषणत्रिशिरसश्च हतान् दृष्ट्वा पुनर्जलदवन्महानादं ननाद। अन्यसुदुष्करं तत् कर्म रामेण कृतं वीक्ष्य परमोद्विग्ना सा रावणपालितां लङ्कां जगाम। मरुद्भिर्वासवमिव सचिवैरुपोपविष्टं दीप्ततेजसं रावणं सा सौधोपरिभागे ददर्श। सूर्यसंकाशे काञ्चने परमासने आसीनो रुक्मवेदिगतः अधिकाज्यसंयुतो ज्वलन् पावक इव स रावणो बभासे। देवगन्धर्वभूतानां महात्मनामृषीणां च समरे अजेयो व्यात्तान–

---

+ Cr अपासर्पत् प्रतिपदम्। ग्राह्यः– अपासर्पद् द्वित्रिपदम्।

नोऽन्तक इव स स्थितः। स देवासुरयुद्धेषु वज्रायुधकृतव्रणः। ऐरावतविषाणाग्रै* रुत्कृष्टकिणवक्षाः। स विंशतिभुजो दशग्रीवः सुन्दरच्छत्रचामराद्युपकरणवान् विशालवक्षा वीरो राजलक्षणसंयुतश्च बभूव। स्निग्धवैदूर्यवद् भासमानः तप्तकाञ्चनकुण्डलः सुभुजः शुक्लदशनो महारथः पर्वतोपमश्च स ददृशे। स देवसंयुगेषु शतशो विष्णुचक्रनिपातैः समस्तैर्देवप्रहरणैश्चाहताङ्गश्चासीत्। सः अक्षोभ्याणां समुद्राणां क्षोभणः क्षिप्रकारी महापर्वतक्षेप्ता सुरप्रमर्दनश्च। स धर्माणां विध्वंसकः परदाराभिमर्शनः सर्वदिव्यास्त्रप्रयोक्ता सदा यज्ञविघ्नकरश्च। स भोगवतीं पुरीं प्राप्य वासुकिं तक्षकं च पराजित्य तक्षकस्य प्रियां पत्नीं जहार। स कैलासपर्वतं गत्वा कुबेरं विजित्य तस्य कामगं पुष्पकं विमानं जहार। स दिव्यं चैत्ररथं वनं सौगन्धिकपुष्पयुतां पुष्करिणीं नन्दनवनमन्यानि देवोद्यानानि च क्रोधाद् विनाशयामास। शैलशिखरोपमः स उत्तिष्ठन्तौ चन्द्रसूर्यौ बाहुभ्यां निवारयति स्म। स पुरा महारण्ये दशवर्षसहस्राणि तपस्तप्त्वा ब्रह्मदेवाय शिरांस्युपजहार। तस्य संग्रामे मानुषादृते देवदानवगन्धर्वपिशाचपतगोरगेभ्यो मृत्युतोऽभयमासीत्। अध्वरेषु हविर्धानपात्रेषु द्विजातिभिरभिष्टुतं मन्त्रपूतं सोमं स उपहन्ति स्म। स पूर्णकल्पयज्ञनाशकः क्रूरो ब्रह्मघ्नो दुष्टचारी कर्कशो निरनुक्रोशः प्रजानामहिते रतः सर्वप्राणिरोदकः सर्वलोकभयावहश्च। महाबलं तं दिव्यवस्त्राभरणमाल्योपशोभितं पौलस्त्यकुलनन्दनं भ्रातरं राक्षसी शूर्पणखा ददर्श। लक्ष्मणेन विरूपिता शूर्पणखा स्वां स्थितिं प्रदर्श्य रावणं सुदारुणं वाक्यमब्रवीत्।

---

* ऐरावतश्चतुर्दन्तः।

## ३१

ततो दीना शुर्पणखा संक्रुद्धा लोकरावणं रावणं मन्त्रिगणमध्ये परुषं वाक्यमब्रवीत्। प्रमत्तः कामभोगेषु स्वैरवृत्तो निर्निरोधो बोद्धव्यं समुत्पन्नं घोरं भयं नावबुध्यसे। ग्राम्यभोगसक्तं स्वेच्छाचारिणं लुब्धं महीपतिं श्मशानाग्निमिव प्रजा न बहुमन्यन्ते। कर्तव्यकाले यः पार्थिवः कार्याणि स्वयं नानुतिष्ठति तस्य कार्याणि राज्यं स च नशिष्यन्ति। अचारचक्षुषमप्रजादर्शनं पराधीनं नृपं द्विपा नदीपङ्कमिव प्रजा दूराद् वर्जयन्ति। अस्वाधीना ये नराधिपा देशं न रक्षन्ति ते सागरे गिरय इव न वर्धन्ते। त्वं बुद्धिमद्भिर्देवैर्गन्धर्वैर्दानवैश्च विगृहीतवान् परन्तु चारानिनियोज्य देशवार्ता न ज्ञातवान्। किञ्च त्वं चपलः। तादृशस्त्वं कथं राजा भविष्यसि? हे जयतां वर! येषां नरेन्द्राणां चारः कोशो नयश्चास्वाधीनास्ते सामान्यैर्जनैः समाः सन्ति। यस्मान्नराधिपा दूरस्थान् सर्वान् विषयान् चारेण पश्यन्ति तस्माद् राजानो दीर्घचक्षुष उच्यन्ते। अप्रयुक्तचारः सामान्यैर्मन्त्रिभिः परिवृतस्त्वं दृश्यसे यतो जनस्थाने+ हतं स्वजनं नावबुध्यसे। एकेन रामेण क्रूरकर्मणां रक्षसां चतुर्दश सहस्राणि खरदूषणाभ्यां सह हतानि। अश्रमं रामः सर्वकार्याणि करोति। तेन ऋषीणामभयं दत्तम्। दण्डकाः कृतक्षेमाः। जनस्थानं धर्षितम्। त्वं लुब्धः प्रमत्तः पराधीनश्चासि। स्वे विषये समुत्पन्नं भयं न वेत्सि। तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठं पार्थिवं व्यसने सर्वे त्यजन्ति। अधिकगर्वितमग्राह्यमात्मानं महाधिकं मन्यमानं क्रोधनं महीपतिं स्वजनोऽपि व्यसने हन्ति।

---

+ Cr जनस्थानम्। ग्राह्यः– जनस्थाने।

यो राजा कार्याणि नानुतिष्ठति भयेषु न बिभेति च स क्षिप्रं राज्याच्च्युतो दीनस्तृणैस्तुल्यो भविष्यति। शुष्कैः काष्ठैर्लोष्टैः पांसुभिरपि कार्यं भवेत्। स्थानात् परिभ्रष्टैर्वसुधाधिपैस्तु कार्यं न स्यात्। समर्थोऽपि राज्याद् भ्रष्टो राजा उपभुक्तं वास इव मृदिताः स्रज इव निरर्थकः। यो राजा अप्रमत्तः सर्वज्ञो विजितेन्द्रियः कृतज्ञो धर्मशीलश्च स राजा चिरं तिष्ठति। नयनाभ्यां प्रसुप्तोऽपि यो राजा नयचक्षुषा जागर्ति यस्य क्रोधस्यानुग्रहस्य च फलं प्रकटं वीक्ष्यते स राजा जनैः पूज्यते। त्वं तु दुर्बुद्धिरेतैर्गुणैर्विवर्जितोऽसि। अत एव रक्षसां सुमहान् वधश्चारैस्तेऽविदितः। परावमन्ता विषयसंगतो देशकालप्रविभागतत्त्वाज्ञो+ गुणदोषनिश्चये अयुक्तबुद्धिर्विपन्नराज्यो झटिति विपत्स्यते। धनदर्पबलान्वितः क्षणदाचरेश्वरो रावण इति शूर्पणखया परिकीर्तितान् स्वदोषान् बुद्ध्या समीक्ष्य चिरं विचिन्तयामास।

## ३२

अमात्यमध्ये परुषं वचो ब्रुवतीं क्रुद्धां शूर्पणखां संक्रुद्धो रावणः परिपप्रच्छ। रामः कः? कथंवीर्यः? किंपराक्रमः? सुदुश्चरं दण्डकारण्यं किमर्थं प्रविष्टः? येन खरदूषणत्रिशिरसः सर्वे राक्षसाश्च निहतास्तस्य रामस्यायुधं किम्? राक्षसेन्द्रेणैवमुक्ता क्रोधपूर्णा राक्षसी ततो रामं यथावदाख्यातुमुपचक्रमे। दशरथात्मजो रामो दीर्घबाहुर्विशालाक्षश्चीरकृष्णाजिनाम्बरः कन्दर्पसमरूपश्चास्ति। शक्रचापनिभं कनकभूषितं चापं विकृष्य महाविषान् सर्पानिव दीप्तान् नाराचान् क्षिपति। रणे रामः कदा शरानाददाति कदा कार्मुकं विकर्षति कदा शरान् मुञ्चति

+ Cr नदेशकाल। न देशकाल इति पाठश्च।

नाहमपश्यम्। इन्द्रेणाश्मवृष्टिभिराहतं सस्यमिव शरवृष्टिभिर्हन्यमानं तत् सैन्यमेवापश्यम्। पदातिनैकेन रामेण तीक्ष्णैः शरैर्बहुस्वल्पकाले भीमरूपाणां रक्षसां चतुर्दश सहस्राणि खरदूषणाभ्यां सह निहतानि। ऋषीणामभयं दत्तं दण्डकाः कृतक्षेमाश्च। महात्मना प्रसिद्धबुद्धिना स्त्रीवधं शङ्कमानेन रामेणाहमेका परिभूय कथञ्चिन्मुक्तास्मि। महातेजा गुणवान् तुल्यविक्रमः अनुरक्तो भक्तो लक्ष्मणो नाम तस्य भ्राता चास्ति। सः अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान् बली नित्यं रामस्य दक्षिणो बाहुर्बहिश्चरः प्राणश्च। तस्य रामस्य सर्वाङ्गसुन्दरी विशालाक्षी विदेहराजपुत्री सीतेति धर्मपत्नी चास्ति। तथारूपा स्त्री देवी गन्धर्वी यक्षी किंनरी मानुषी वा मया न दृष्टपूर्वा। यस्य सीता भार्या भवेत् हृष्टा यं च परिष्वजेत् स सर्वेषु लोकेषु पुरन्दरमप्यतिशय्य जीवेत्। सुशीला श्लाघ्यसर्वाङ्गी रूपेण भुवि अप्रतिमा सा तवानुरूपा भार्या स्यात्। तथा त्वं तस्या अनुरूपः पतिः स्याः। विस्तीर्णजघनां पीनोत्तुङ्गपयोधरां वराननां तां तव भार्यार्थमानेतुमहमुद्यता अभवम्। पूर्णचन्द्रनिभाननां तामद्य दृष्ट्वा त्वं मन्मथशराणां विधेयो भविष्यसि। तस्यां तव भार्यार्थे यद्यभिप्रायो जायते तर्हीदानीमेव जयार्थं दक्षिणः पादः शीघ्रमुद्धियताम्। राक्षसेश्वर! तथा नृशंसस्याश्रमवासिनस्तस्य रामस्य वधात् तेषां रक्षसां प्रियं कुरु। निशितैः शरैस्तं रामं लक्ष्मणं च हत्वा हतनाथां सीतां सुखं यथावदुपभोक्ष्यसे। ममैतद् वाक्यं यदि ते रोचते तर्हि निर्विशङ्केन त्वया मम वचनं क्रियताम्। खरदूषणाभ्यां सह सर्वान् राक्षसान् जनस्थाने रामेण हतान् विज्ञाय त्वमद्य कृत्यं प्रतिपत्तुमर्हसि।

## ३३

शूर्पणखाया भयंकरं तद् वाक्यं श्रुत्वा रावणः सचिवान् विसृज्य कार्यं निर्णिनाय। अथ तत् कार्यं समालोच्य यथावदवबुध्य दोषाणां गुणानां च बलाबलं संप्रधार्य एवं कर्तव्यमित्यात्मनि निश्चित्य स्थिरबुद्धिस्ततो यानशालां जगाम। प्रच्छन्नं यानशालां गत्वा रथं संयोजयितुं सूतं संचोदयामास। एवमुक्तः शीघ्रकारी सारथिस्तस्याभिमतमुत्तमं रथं क्षणेन संयोजयामास। ततो धनदानुजो रावणः काञ्चनभूषणैः पिशाचवदनैः खरैर्युक्तं काञ्चनं कामगं रत्नभूषितं रथमास्थाय मेघप्रतिमनादेन तेन समुद्रं ययौ। श्वेतवालव्यजनः श्वेतच्छत्रः स्निग्धवैदूर्यप्रभस्तप्तकाञ्चनभूषणो दशास्यो विंशतिभुजः सुन्दरराजचिह्नवान् देवशत्रुर्मुनीन्द्रघ्नो दशशिखरमहापर्वतवद् दृश्यमानः कामगं रथमास्थायाकाशे विद्युन्मण्डलवान् सबलाको मेघ इव शुशुभे। शैलमभितः सहस्रशो नानापुष्पफलैर्वृक्षैरनुकीर्णं सागरानूपमवलोकयन् स जगाम। शीतमङ्गलतोयाभिः पद्मिनीभिर्वेदिमद्भिर्विशालैराश्रमपदैश्च समन्ततः समावृतं कदल्याढकिपूर्णं नारिकेलोपशोभितं पुष्पितैः सालैस्तालैस्तमालैस्तरुभिर्वृतं* परमर्षि-भिरत्यन्तनियताहारैर्नागैर्गरुडैर्गन्धर्वैः किन्नरैर्जितकामैः सिद्धैश्चारणै-र्ब्रह्मपुत्रैर्वैखानसैर्माषगोत्रैश्चन्द्रकिरणपायिभिर्वालखिल्यैर्दिव्याभरणमाल्याभिर्दिव्यरूपाभिः क्रीडानन्दज्ञाभिरप्सरोभिश्चावृतं श्रीमतीभिर्देवपत्नीभिः सेवितं श्रिया वृतममृतार्थिभि+ र्देवदानवसंघैश्चरितं हंसक्रौञ्चमण्डूकव्याप्तं

* लङ्काजनस्थानयोर्मध्ये एते सर्वे वृक्षा यथार्थतस्तदा आसन्निति न निर्णयं यतः कवयः अरण्यवर्णने सर्वान् वृक्षानुदाहरन्ति। किञ्च रामायणकथा कदा बभूव तदा के के वृक्षाः कुत्र कुत्रासन्निति को जानीते?

+ Cr अमृताशिभिः। ग्राह्यः – अमृतार्थिभिः।

सारसैः संप्रणादितं वैडूर्यप्रस्तरं रम्यं सागरकान्त्या स्निग्धं जलप्रायप्रदेशं पश्यन् स जगाम। त्वरया गच्छन् रावणस्तपसा जितलोकानां पाण्डराणि विशालानि दिव्यमाल्ययुतानि तूर्यगीताभिजुष्टानि कामगानि विमानानि समन्ततो गन्धर्वाप्सरसश्च ददर्श। निर्यासरसमूलानां चन्दनानां घ्राणतृप्तिकराणि वनानि श्रेष्ठागरुवनानि उपवनानि उत्तमजात्यानां फलवतां+ सुगन्धिनां तक्कोलानां वनानि तमालस्य पुष्पाणि मरिचस्य गुल्मानि तीरेषु शुष्यमाणान् मुक्तानां समूहान् शङ्खानां समुदायं प्रवालनिचयं काञ्चनान् राजतान् शैलान् मनोज्ञान् प्रस्रवान् प्रसन्नान् ह्रदान् धनधान्योपपन्नानि स्त्रीरत्नैरावृतानि हस्त्यश्वरथगाढानि नगराणि चावलोकयन् रावणो जगाम। सर्वतः समं स्निग्धं मृदुसंस्पर्शमारुतं स्वर्गोपमं समुद्रानूपं स ददर्श। तत्र स मेघाभमृषिभिर्वृतं न्यग्रोधमपश्यद्यस्य शाखाः समन्तात् शतयोजनमायता यस्य च शाखां महाबलो गरुडो भक्षार्थं हस्तिनं महाकायं कच्छपं चादाय पुरा आजगाम। गरुडस्तां शाखां स्वभारेण सहसा बभञ्ज। तस्यां शाखायां वैखानसा माषाश्चन्द्रकिरणपायिनो वालखिल्या अजा धूम्राश्च परमर्षयः संगता बभूवुः। गरुडस्तेषां दयार्थं शतयोजनां तां शाखां तावुभौ गजकच्छपौ चादाय वेगेन जगाम। धर्मात्मा गरुत्मानेकपादेन तौ गृहीत्वा तदामिषं भक्षयित्वा महामुनीन् मोक्षयित्वा निस्तुलं प्रहर्षं लेभे। तेनैव प्रहर्षेण द्विगुणीकृतविक्रमो मतिमान् गरुडः अमृतानयनार्थं मतिं चकार। अयोजालानि निर्मथ्य रत्नमयं गृहं भित्त्वा महेन्द्रभवनाद् गुप्तममृतमाजहार।

---

+ Cr फलानाम्। ग्राह्यः– फलिनाम्। Cr प्रतावविद्यमानोऽयं पाठः CD ग्रन्थयोः प्रामाण्येन ग्राह्यः। (प्रतिः = प्रकाशनम् = edition)

महर्षिगणजुष्टं सुपर्णकृतचिह्नं नाम्ना सुभद्रं तं न्यग्रोधं रावणो ददर्श। समुद्रस्य परं पारं गत्वा रम्ये पुण्ये वनान्तरे एकान्तप्रदेशे आश्रमं ददर्श। तत्र कृष्णाजिनजटावल्कलधारिणं नियताहारं मारीचं नाम राक्षसं ददर्श। समागतं रावणं मारीचो विधिवदर्चयामास। ततो वाक्यकोविदो रावणो मारीचमुवाच।

## ३४

तात! मारीच! मम वचनं श्रूयताम्। अहमार्तोऽस्मि। आर्तस्य मम त्वं परमा गतिः। त्वं जनस्थानं जानासि। तत्र महारण्ये खरो दूषणस्त्रिशिराः शूर्पणखा अन्ये राक्षसाश्च मन्नियोगेन मुनीन् बाधमाना वसन्तीति च त्वं वेत्सि। खरनायकत्वेन तत्र चतुर्दश सहस्राणि रक्षांसि प्रवर्तन्ते। सर्वे ते महाबला राक्षसा संयुगे रामेण सह समागच्छन्। संजातरोषेण रामेण किंचिदपि परुषमनुक्त्वैव शरैर्धनुर्व्यापारितम्। पदातिना मानुषेण रामेण राक्षसानां चतुर्दशसहस्राणि तीक्ष्णैः शरैर्निहतानि। खरदूषणत्रिशिरसो हता दण्डकाश्च निर्भयाः कृताः। क्रुद्धेन पित्रा सभार्यो निरस्तः क्षीणजीवितः क्षत्रियपांसनः स रामस्तस्य सैन्यस्य हन्तास्ति। स दुश्शीलः कर्कशो मूर्खो लुब्धः अजितेन्द्रियस्त्यक्तधर्मा भूतानामहिते आसक्तश्च। तेनैव वैरं विना केवलं बलमाश्रित्य मे भगिनी कर्णनासाखण्डनेन विरूपिता। तस्य भार्यां देवकन्योपमां सीतां विक्रमेण जनस्थानादानेष्यामि। त्वं तस्मिन् कार्ये मम सहायो भव। महाबल! सहायेन पार्श्वस्थेन त्वया भ्रातृभिश्च युद्धे समग्रान् सुरान् नाभिचिन्तयामि। तस्मान्मम सहायो भव। समर्थोऽसि। वीर्ये युद्धे दर्पे च ते सदृशो नास्ति। अत एव त्वत्समीपं प्राप्तोऽस्मि। मम साहाय्ये यत् कार्यं तत्

कर्म शृणु। त्वं रजतबिन्दुभिश्चित्रः सौवर्णो मृगो भूत्वा रामाश्रमे सीतायाः प्रमुखे चर। मृगरूपिणं त्वां दृष्ट्वा गृह्यतामिति सीता भर्तारं लक्ष्मणं च निस्संशयमभिधास्यति। ततस्तयोरपाये शून्ये प्रदेशे निराबाधः सुखं सीतां राहुश्चन्द्रप्रभामिव हरिष्यामि। ततः पश्चाद् भार्याहरणदुर्बलं रामं सुखं प्रहरिष्यामि। रावणमुखाद् रामकथां श्रुत्वैव मारीचस्य मुखं शुष्कं बभूव। स परित्रस्तोऽभवत्। रामपराक्रमज्ञो मारीचस्त्रस्तो विषण्णश्च कृताञ्जलिः रावणं तस्मै हितं स्वहितं च यथार्थं वाक्यमुवाच।

## ३५

राक्षसेन्द्रस्य वचनं श्रुत्वा मारीचः प्रत्युवाच। राजन्! सदा कालानुसारप्रियवादिनः पुरुषाः सुलभाः। अप्रियस्यापि पथ्यस्य वक्ता श्रोता च दुर्लभौ। त्वमप्रयुक्तचारश्चपलश्च। महावीर्यं गुणोन्नतं महेन्द्रवरुणोपमं रामं नूनं न बुध्यसे। तात! अपि स्वस्ति भवेद् भुवि सर्वेषां रक्षसाम्? अपि सुसंक्रुद्धो रामो लोकमराक्षसं न कुर्यात्? अपि जनकात्मजा ते जीवितान्ताय नोत्पन्ना? अपि सीताकारणेन महत्यापदा न भवेत्? अपि कामवृत्तं निरङ्कुशं त्वामीश्वरं प्राप्य सराक्षसा पुरी लङ्का त्वया सह न विनश्येत्? कामवृत्तो दुश्शीलः पापमन्त्रितो दुर्मतिस्त्वद्विधो राजा आत्मानं स्वजनं राष्ट्रं च नूनं हन्ति। कौसल्यानन्दवर्धनो रामः पित्रा न परित्यक्तः। कथञ्चन नामर्यादः। लुब्धो दुश्शीलः क्षत्रियपांसनश्च न। धर्मेण सद्गुणैर्हीनो न। तीक्ष्णो न। सर्वेषां भूतानामहिते रतो न। पितरं कैकेय्या वञ्चितं दृष्ट्वा तं सत्यवादिनं करिष्यामीति धर्मात्मा रामो वनं प्रव्रजितः। कैकेय्याः पितुर्दशरथस्य च प्रियकामार्थं राज्यं भोगांश्च हित्वा स दण्डकावनं प्रविष्टः। रामः कर्कशः

अविद्वानजितेन्द्रियश्च नास्ति। अनृतं दुःश्रुतं च+ त्वमेवं मिथ्या वक्तुं नार्हसि। रामः शरीरवान् धर्मः। साधुः। सत्यपराक्रमः। देवानां मघवानिव सर्वस्य लोकस्य राजा। भार्या वैदेही रामेण स्वतेजसा रक्षितास्ति। विवस्वतः प्रभामिव कथं तां प्रसभं हर्तुमिच्छसि? शरार्चिषमनाधृष्यं चापखड्गेन्धनं रणे दीप्तं रामाग्निं सहसा प्रवेष्टुं त्वं नार्हसि। तात! स रामो धनुर्विवृतदीप्तास्यः शरार्चिरमर्षणस्तीक्ष्णः शत्रुसैन्यप्रहारी यमतुल्यः। राज्यं सुखमिष्टं जीवितं च संत्यज्य तमतीवासादयितुं त्वं नार्हसि। यस्य सीता भार्यास्ति स रामः अप्रमेयं तेजः। रामचापाश्रयां तां वने हर्तुं न त्वं समर्थः। सा रामस्य प्राणेभ्योऽपि प्रियतरा भार्या नित्यमनुव्रता च। दीप्तस्य हुताशस्य शिखेव सास्ति। व्यर्थमिममुद्यमं कृत्वा तव किं प्रयोजनम्? त्वं तेन रणे दृष्टश्चेत् तव जीवितं तदन्तं भवेत्। जीवितं सुखं सुदुर्लभं राज्यं च यदि चिरं भोक्तुमिच्छसि रामविप्रियं मा कृथाः++। स त्वं धर्मिष्ठैर्विभीषणपुरोगमैः सर्वैः सचिवैः सार्धं मन्त्रयित्वा आत्मनो निश्चयं कृत्वा दोषाणां च गुणानां च बलाबलं संप्रधार्यात्मनो राघवस्य च बलं तत्त्वतो ज्ञात्वा हिताहितं विनिश्चित्य क्षमं कर्तुमर्हसि। रामेण युद्धे समागमं न ते क्षमं मन्ये। तस्मान्ममेदं क्षमं युक्तं च वचनं शृणु।

३६

कदाचिदहमपि वीर्यादिमां पृथिवीं पर्यटन् नागसहस्रस्य बलं धारयन् पर्वतोपमो नीलजीमूतसंकाशस्तप्तकाञ्चनकुण्डलः किरीटी

---

\+ Cr न श्रुतं। ग्राह्यः – दुःश्रुतं।

++ ग्राह्या– यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम्।

परिघायुधो लोकस्य भयं जनयन् ऋषिमांसानि भक्षयन् दण्डकारण्यं व्यचरम्। अथ धर्मात्मा विश्वामित्रो महामुनिर्मद्वित्रस्तः स्वयं नरेन्द्रं दशरथं गत्वा इदमब्रवीत्। नरेश्वर! मारीचान्मे महद् भयं समुत्पन्नम्। अयं रामः समाहितः पर्वकाले मां रक्षतु। इत्येवमुक्तो धर्मात्मा राजा दशरथो महामुनिं विश्वामित्रं प्रत्युवाच। अयं राम ऊनषोडशवर्षः अकृतास्त्रश्च। मम सर्वं सैन्यं मया सह गमिष्यति। यथेप्सितं तव शत्रुं हनिष्यामि। इत्युक्तः स मुनिः राजानमुवाच। लोके रामादन्यद् बलं तस्य रक्षसो न पर्याप्तम्। एष रामो बालोऽपि तस्य मारीचस्य निग्रहे समर्थः। ततो राममादाय गमिष्यामि। तव स्वस्ति भवतु। एवमुक्त्वा मुनिर्विश्वामित्रः परमप्रीतस्तं नृपात्मजमादाय स्वमाश्रमं जगाम। तदा रामो दण्डकारण्ये यज्ञदीक्षितं मुनिं चित्रं धनुर्विस्फारयन्नवतस्थे। अजातपुरुषचिह्नो बालः श्यामः शुभेक्षण एकवस्त्रधरः शिखी कनकमालालङ्कृतो दीप्तेन स्वेन तेजसा दण्डकारण्यं शोभयन् उदितो बालचन्द्र इव तदादृश्यत। ततो मेघसंकाशस्तप्तकाञ्चनकुण्डलो बली दत्तवरोऽहं दर्पात् तदाश्रममगमम्। उद्यतायुधः प्रविष्टमात्रोऽहं तेन दृष्टः। स मां दृष्ट्वा असम्भ्रान्तो धनुः सज्यं चकार। मोहादहमयं बाल इति राघवमवजानन् कृतत्वरो विश्वामित्रस्य तां वेदिमभ्यधावम्। ततस्तेन शत्रुनिबर्हणः शितो बाणो मुक्तः। तेन ताडितोऽहं शतयोजनदूरे समुद्रे क्षिप्तः। भ्रान्तचेतनोऽहं रामस्य शरवेगेन निरस्तो गम्भीरे सागराम्भसि पातितश्चिरात् संज्ञां प्राप्य लङ्कां पुरीं प्रति गत आसम्। अकृतास्त्रेण बालेन रामेणैवं मुक्तोऽस्मि। सहायास्तु हताः। तस्मान्मया वार्यमाणस्त्वं यदि रामेण विग्रहं करिष्यसि तर्हि घोरामापदं क्षिप्रं प्राप्य नशिष्यसि।

क्रीडाविनोदनिपुणानां समाजोत्सवशालिनां रक्षसामपि सन्तापमनर्थं च प्रापयिष्यसि। हर्म्यप्रासादसंबाधां नानारत्नविभूषितां लङ्कां पुरीं त्वं मैथिलीकृते विनष्टां द्रक्ष्यसि। पापान्यकुर्वन्तः शुचयोऽपि पापसंश्रयात् सर्पयुते ह्रदे मत्स्या इव परपापैर्विनश्यन्ति। दिव्यचन्दनदिग्धाङ्गान् दिव्याभरणभूषितान् राक्षसान् तव दोषाद् भूमौ अभिहतान् द्रक्ष्यसि। हतशेषान् राक्षसान् हृतदारान् सदारांश्च अशरणान् दश दिशो विद्रवतस्त्वं द्रक्ष्यसि। शरजालव्याप्तामग्निज्वालासमावृतां प्रदग्धभवनां लङ्कामसंशयं त्वं द्रक्ष्यसि। तव परिग्रहः प्रमदानां सहस्राणि सन्ति। स्वदारनिरतो भव। स्वकुलं रक्ष। गौरवं वृद्धिं राज्यमात्मन इष्टं जीवितं च यदि चिरं भोक्तुमिच्छसि तर्हि रामस्यापकारं मा कृथाः। सुहृदा मया भृशं निवार्यमाणः सीतां प्रसह्य यदि धर्षयिष्यसि तदा क्षीणबलः सबान्धवो रामशरगृहीतजीवितो यमक्षयं गमिष्यसि।

## ३७

तदा संयुगे कथञ्चित् तेन मुक्त आसम्। तत्पश्चादपि यद् वृत्तं तच्छृणु। तथाकृतोऽप्यनिर्विण्णोऽहं मृगरूपाभ्यां द्वाभ्यां राक्षसाभ्यां सहितो दण्डकावनं प्रविष्ट आसम्। दीप्तजिह्वो महाकायस्तीक्ष्णशृङ्गो महाबलो मांसभक्षो महामृगो भूत्वा दण्डकारण्यं व्यचरम्। अत्यन्तघोरोऽहमग्निहोत्रेषु तीर्थेषु देवतावृक्षसमीपेषु च तापसान् संप्रधर्षयन् व्यचरम्। दण्डकारण्ये धर्मचारिणस्तापसान् निहत्य तेषां रुधिराणि पिबन् मांसानि भक्षयन् क्रूरो रुधिरमत्तश्च व्यचरम्। धर्मदूषकोऽहं दण्डकारण्ये विचरन् तदा तापसं धर्ममाश्रितं रामं लक्ष्मणं वैदेहीं चासादयम्। नियताहारं तापसं वनगतं सर्वभूतहिते रतं महाबलं रामं परिभूय

तापसोऽयमित्यनादृत्य पूर्ववैरं पूर्वप्रहारं चानुस्मरन् मूढोऽहं तीक्ष्णशृङ्गो मृगाकृतिस्तं जिघांसुरभ्यधावम्। स चापं बलवद् विकृष्य शत्रुनिबर्हणान् शितान् सुपर्णानिलतुल्यगान् त्रीन् बाणानमुञ्चत्। वज्रसंकाशा रक्तभोजनाः संनतपर्वाणस्ते त्रयो बाणाः सुघोराः सहिता आजग्मुः। अहं रामपराक्रमज्ञो दृष्टभयो वञ्चनानिपुणश्च। तस्मात् समुत्क्रान्तः शरान्मुक्त आसम्। तावुभौ राक्षसौ तु हतौ। रामस्य शरेण कथञ्चिन्मुक्तोऽहं जीवितं प्राप्य योगमार्गमवलम्ब्य समाहितस्तापस इह प्रव्रज्य निवसामि। चीरकृष्णाजिनाम्बरं गृहीतचापं पाशहस्तमन्तकमिव रामं वृक्षे वृक्षे पश्यामि। रावण! भीतोऽहं रामसहस्राण्यपि पश्यामि। इदं सर्वमरण्यं राममयं मे प्रतिभाति। रहिते प्रदेशे राममेव पश्यामि। स्वप्ने रामं दृष्ट्वा विचेतन उद्भ्रमामि। रामत्रस्तस्य मे रकारादीनि* नामानि रत्नानि रथाश्चैव त्रासं संजनयन्ति। अहं रामस्य प्रभावं जानामि। तेन युद्धं न ते क्षमम्। एतावदुक्तोऽपि यदि रामेण रणं चिकीर्षसि युद्ध्यस्व विरम वा। यदि मां जीवन्तमिच्छसि रामविषयं मे मा वद। मम हितं वचो यदि न स्वीकरिष्यसि तर्हि सबान्धवो रणे जीवितं त्यक्ष्यसि।

## ३८

एवं मारीचेनोक्तो रावणः क्षमं युक्तं तद् वाक्यं मर्तुकाम औषधमिव न प्रतिजग्राह। कालचोदितः स पथ्यहितवक्तारं तं मारीचमयुक्तं परुषं वाक्यमब्रवीत्। मारीच! अयुक्तार्थं यदेतद्

---

* रकारादीनि नामानि (१८) इति पाठः। महेश्वरतीर्थगोविन्दराजौ रकारप्रयोगमार्षं कथयतः। परन्तु तत्त्वबोधिनीबालमनोरमाकारौ साधुं मन्येते। ३-३-१०८ वार्तिकम्।

वाक्यं मे कथ्यते तदूषरे उप्तं बीजमिवात्यर्थं निष्फलम्। त्वद्वाक्यैः पापशीलस्य मूर्खस्य विशेषतो मानुषस्य रामस्य संयुगान्मां भेदयितुं न शक्यम्। यो रामः प्राकृतं स्त्रीवाक्यं श्रुत्वा सुहृदो राज्यं मातरं पितरं च त्यक्त्वा सहसा वनं गतस्तेन युद्धादहं न भेदनीयः। संयुगे खरघातिनस्तस्य प्राणैः प्रियतरा सीता मयावश्यं त्वत्सहायेन हर्तव्या। मारीच! मे बुद्धिरेवं निश्चिता हृदि वर्तते। सेन्द्रैः सुरासुरैरपि व्यावर्तयितुं न शक्या। अस्य कार्यस्य विनिश्चये दोषं गुणं वा अपायमुपायं वा यदि संपृष्टस्तर्हि त्वमेवं वक्तुमर्हसि। य आत्मन ऐश्वर्यमिच्छेत् तेन संपृष्टेन विपश्चिता सचिवेनोद्यताञ्जलिना राज्ञे वक्तव्यम्। वसुधाधिपः अप्रतिकूलं मृदुपूर्वं शुभं हितमुपचारेण युक्तं वाक्यं वक्तव्यः। मारीच! गौरवशून्यं यद्धितं वाक्यं सतिरस्कारमुच्यते तन्मानार्हो राजा नाभिनन्दति। अमितौजसो राजानः अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च पञ्च रूपाणि धारयन्ति। तथा ते औष्ण्यं पराक्रमं सौम्यं दण्डं प्रसन्नतां च धारयन्ति। तस्मात् पार्थिवाः सर्वास्ववस्थासु मान्याः पूज्याश्च। दुरात्मा त्वमिमं धर्ममविज्ञाय केवलेनाज्ञानेन मामभ्यागतं परुषमित्थं वदसि। गुणदोषौ आत्मनि क्षमं वा त्वां न पृच्छामि। अस्मिन् महाकार्ये मम साहाय्यं कर्तुमेव त्वं पृष्टोऽसि। त्वं रजतबिन्दुभिश्चित्रः सौवर्णो मृगो भूत्वा वैदेहीं प्रलोभ्य तत्प्रदेशादपक्रम्य ततस्ततो यथेष्टं संचर। काञ्चनं मायामृगं त्वां दृष्ट्वा विस्मिता वैदेही एनं क्षिप्रमानयेति रामं वक्ष्यति। रामे लक्ष्मणे चापक्रान्ते वैदेहीं सहस्राक्षः शचीमिव यथासुखमानेष्यामि। मारीच! एवमिदं कार्यं कृत्वा यथेच्छं गच्छ। तव राज्यस्यार्धं

प्रदास्यामि। सौम्य! अस्य कार्यस्य विवृद्धये शिवं मार्गं गच्छ। राघवं वञ्चयित्वा युद्धमकृत्वा सीतां प्राप्य कृतकार्यस्त्वया सह लङ्कां प्रति गमिष्यामि। ममैतत्कार्यं बलादप्यवश्यं करिष्यसि। राज्ञः प्रतिकूलस्थो जातु सुखी न भवति। राममासाद्य त्वं जीविष्यसि मरिष्यसि वा। मया विरुध्याद्य ते मृत्युर्ध्रुवः। एतद् बुद्ध्या यथावत् प्रतिगृह्यात्र यत् पथ्यं तत् त्वं तथा कुरु।

## ३९

रावणेनेत्थं प्रतिकूलं राजवदाज्ञप्तो मारीचो राक्षसाधिपं परुषमुवाच। सपुत्रस्य सराष्ट्रस्य सामात्यस्य तेऽयं विनाशः पापकर्मणा केनोपदिष्टः? राजन्? कः खलु पापकृत् सुखिना त्वया न संतुष्यति? मृत्युद्वारमिदं कार्यमुपायतः केन तवोपदिष्टम्? स्पष्टमिदं यत् हीनवीर्यास्ते शत्रवस्त्वां बलीयसोपरुद्धं विनश्यन्तमिच्छन्ति। कः स क्षुद्रः अहितवादी त्वामिदमुपादिशद् यः स्वकृतेन त्वां नश्यन्तमिच्छति? उत्पथमारूढं त्वां ये सर्वशो न निगृह्णन्ति ते तव सचिवा वध्याः खलु। परन्तु न हन्यन्ते। कामवृत्तः कापथमाश्रितो राजा सद्भिरमात्यैः सर्वदा निग्राह्यः। तथा निग्राह्यस्त्वं न निगृह्यसे। सचिवा धर्ममर्थं कामं यशश्च स्वामिप्रसादात् प्राप्नुवन्ति। विपर्यये तत् सर्वं व्यर्थं भवति। स्वामिवैगुण्यादितरे जनाः कष्टं प्राप्नुवन्ति। धर्मश्च जयश्च राजमूलः। तस्मात् सर्वास्ववस्थासु राजा रक्षितव्यः। तीक्ष्णस्वभावेन प्रतिकूलप्रवर्तकेन अविनीतेन वा राज्ञा राज्यं पालयितुमशक्यम्। तीक्ष्णमन्त्रा मन्त्रिणो विषमे मन्दसारथयो रथा इव राज्ञा सह भज्यन्ते। लोके युक्तधर्ममनुष्ठिता बहवः साधवः परेषामपराधेन सपरिवारा

विनष्टाः। प्रतिकूलेन तीक्ष्णेन स्वामिना रक्ष्यमाणाः प्रजा गोमायुना रक्षिता मेषा इव न वर्धन्ते। येषां कर्कशो दुर्बुद्धिरजितेन्द्रियस्त्वं राजासि ते सर्वे राक्षसा अवश्यं विनशिष्यन्ति। यदह+ मस्मिन् कर्मणि विनशिष्यामि तदिदं घोरं काकतालीयं मया प्राप्तम्। महदिदमशोभनं यत् ससैन्यस्त्वं विनशिष्यसि। मां हत्वा रामो न चिरात् त्वां हनिष्यति। अरिणा हतो म्रियेयेति कृतकृत्योऽस्मि। रामस्य दर्शनादेव मां हतमवधारय। सीतां हृत्वा सबान्धवमात्मानं हतं विद्धि। मया सहित आश्रमात् सीतामानेष्यसि चेत् त्वमहं लङ्का राक्षसाश्च न भवामः। हितैषिणा मया निवार्यमाण इदं वाक्यं न सहसे। गतायुषः परेतकल्पा नराः सुहृद्वचनं हितं न हि गृह्णन्ति।

## ४०

एवमुक्त्वा मारीचो राक्षसप्रभोर्भयाद् दीनो गच्छाव इति रावणमब्रवीत्। शरचापासिधारिणा मद्वधोद्यतशस्त्रेण रामेणाचिराद् दृष्टो भवेयं मे जीवितं चाचिराद् विनष्टं भवेत्। त्वय्येवं दुरात्मनि किं नु++ मया कर्तुं शक्यम्? एषोऽहं गच्छामि। स्वस्ति ते भवतु। रावणस्तेन वचनेन प्रजहर्ष। मारीचं गाढं परिष्वज्येदमुवाच। मदनुरोधेनेदं ते भाषितं शौण्डीर्ययुक्तमस्ति। इदानीं त्वं मारीचोऽसि। इतः पूर्वं त्वं कश्चिदन्य एव। पिशाचवदनैः खरैर्युक्तो रत्नविभूषित आकाशगामी रथो मया सह शीघ्रमारुह्यताम्। ततो रावणमारीचौ विमानाकारं तं रथमारुह्य तस्मादाश्रममण्डलात् शीघ्रं ययतुः। पत्तनानि वनानि गिरीन् नदी राष्ट्राणि नगराणि च पश्यन्तौ तौ जग्मतुः। ततो मारीचसहितो

---

+ Cr त्वया। ग्राह्यः मया। ++ Cr किं तु। ग्राह्यः किन्नु।

रावणो राघवस्याश्रमं ददर्श। काञ्चनालङ्कृतात् तस्माद् रथादवतीर्य रावणो मारीचं हस्ते गृहीत्वाब्रवीत्। सखे! कदलीवृतमेतद् रामाश्रमपदं दृश्यते। यदर्थमावामागतौ तत् कार्यं शीघ्रं क्रियताम्। तदा मारीचो रावणवचनेन मृगो भूत्वा रामस्याश्रमद्वारे विचचार। मणिप्रवरशृङ्गाग्रः सितासितमुखद्युतिः रत्नपद्मोत्पलमुखे इन्द्रनीलोत्पलश्रवाः किञ्चिदभ्युन्नतग्रीव इन्द्रनीलनिभोदरो मधूकनिभपार्श्वः कञ्जकिञ्जल्कसन्निभो वैदूर्यसंकाशखुरस्तनुजङ्घः सुसंहत इन्द्रायुधसमानवर्णेन पुच्छेन विराजितो मनोहरः स्निग्धवर्णो नानाविधै रत्नैर्वृतः परमशोभनो मृगो राक्षसः क्षणेन परिणतः। नानाधातुविचित्रितं मनोहरं दर्शनीयं रूपं कृत्वा मारीचो वनं रामाश्रमपदं च प्रज्वलयन् वैदेह्याः प्रलोभनार्थं विचरन् तस्मात् प्रदेशात् शाद्वलानि जगाम। स रूप्यैर्बिन्दुशतैश्चित्रो भूत्वा प्रियदर्शनो विटपिनां किसलयानि भङ्क्त्वा अदन् विचचार। कदलीगृहकं गत्वा कर्णिकारानितस्ततो मन्दं गच्छन् सीतासन्दर्शनप्रदेशं समाश्रयत्। स महामृगो राजीववत् चित्रपृष्ठभागवानासीत्। स रामाश्रमपदाभ्याशे यथासुखं विचचार। स श्रेष्ठो मृगो मुहूर्तं गत्वा पुनस्त्वरया प्रतिनिवर्तमानो विचचार। विक्रीडन् पुनः पुनर्भूमौ न्यषीदत्। आश्रमद्वारमागम्य मृगयूथनिकटं जगाम। मृगतां गतो राक्षसः सीतादर्शनमाकाङ्क्षन् मृगयूथैरनुगतः पुनरेव निवर्तते स्म। शीघ्रं धावन् चित्राणि मण्डलानि परिभ्रमति स्म। वनेचराः सर्वेऽन्ये मृगास्तं समुद्वीक्ष्योपागम्य समाघ्राय दश दिशो विदुद्रुवुः। मृगवधे रतः स राक्षसोऽपि तान् वन्यान् मृगान् संस्पृशन् भावस्य प्रच्छादनार्थं नाभक्षयत्। तस्मिन्नेव काले शुभलोचना वैदेही कुसुमापचयासक्ता

वृक्षानुपजगाम+। मदिरेक्षणा सा कर्णिकारानशोकांश्चूतांश्च वृक्षान् कुसुमान्यवचिन्वती चचार। रत्नमयं मुक्तामणिविचित्राङ्गं तं मृगं सा ददर्श। रुचिरदन्तोष्ठी++ सा रूप्यस्य धातूनां च तुल्यतनूरुहं तं मृगं विस्मयोत्फुल्लनयना सस्नेहं समुदैक्षत। स मायामयो मृगो रामदयितां पश्यन् तद् वनं दीपयन्निव पुनश्चित्रं विचचार। अदृष्टपूर्वं नानारत्नमयं तं मृगं दृष्ट्वा सीता परमं विस्मयं जगाम।

## ४१

कुसुमान्यपचिन्वती सीता हेमराजतपार्श्वाभ्यामुपशोभितं मृगं संप्रेक्ष्य प्रहृष्टा भर्तारं सर्वदायुधधारिणं लक्ष्मणं चोच्चैराजुहाव। तयाहूतौ रामलक्ष्मणौ तं देशं वीक्षमाणौ तदा तं मृगं ददृशतुः। तं दृष्ट्वा शङ्कमानो लक्ष्मणो राममुवाच। अहमेनं मृगं तं मारीचमेव मन्ये। हृष्टा मृगयां चरन्तो राजानः कामरूपिणानेन पापेन कपटवेषेण निहताः। मायाविदानेन भानुमद् गन्धर्वपुरसन्निभमिदं मायामृगरूपं कृतम्। राम! जगत्यां रत्नविचित्र एवंविधो मृगो नास्ति। एषा माया। संशयो नास्ति। मारीचस्य मायया हृतचेतना सीता एवं ब्रुवाणं लक्ष्मणं प्रतिवार्योवाच। आर्यपुत्र! अभिरामोऽसौ मृगो मे मनो हरति। एनमानय। अस्माकं क्रीडार्थं भविष्यति। अस्माकमिहाश्रमपदे सुदर्शना बहवो हरिणाः सृमराश्चमराश्च सहिताश्चरन्ति। रूपश्रेष्ठा मनोहरा3+ ऋक्षाः पृषतसंघा वानरास्तथा किंनरा विचरन्ति। परन्तु कान्त्या सौम्यतयास्य मृगस्य सदृशो न मया दृष्टपूर्वः। नानावर्णविचित्राङ्गो रत्नबिन्दुव्याप्तः शशिसन्निभो मृगो निर्भयं वनं

---

+Cr पादपानत्यवर्तत। ग्राह्यः – पादपानभ्यवर्तत। ++Cr रुचिरदन्तोष्ठम्। ग्राह्यः – रुचिरदन्तोष्ठी। 3+ Cr महाबलाः। ग्राह्यः – मनोहराः।

ोतयन् शोभते। अहो रूपमहो लक्ष्मीः। मृगस्य कण्ठध्वनिश्च ोभनोऽस्ति। अद्भुतो विचित्राङ्गो मृगो मे हृदयं हरतीव। मृगो ीवन्नेव तव ग्रहणं यद्यभ्येति तदाश्चर्यकरं भवति। वनवासं माप्य यदा वयं राज्यं पुनः प्राप्स्यामस्तदायं मृगः न्तःपुरमलङ्करिष्यति। मृगस्येदं दिव्यं रूपं भवतो भरतस्य वश्रूणां मम च विस्मयं जनयिष्यति। यद्ययं मृगसत्तमो जीवन् । ग्रहणं नाभ्येति तर्ह्यस्य रुचिरमजिनं मे भविष्यति। ाष्पबृस्यामास्तृतायां निहतस्यास्य मृगस्य जाम्बूनदमयत्वचि त्वया हहोपवेष्टुमिच्छामि। भयंकरमिदं स्वेच्छाप्रवर्तनं स्त्रीणामयुक्तमुक्तम्। ाथाप्यस्य सत्त्वस्य वपुषा मम विस्मयो जनितः। एवं सीतायां ुवत्यां काञ्चनरोम्णा मणिप्रवरशृङ्गिणा तरुणादित्यवर्णेन ाक्षत्रयुताकाशकान्तिना तेन मृगेण रामस्य मनोऽपि विस्मयं प्राप। । एवं सीतावचः श्रुत्वा अद्भुतं तं मृगं दृष्ट्वा हृष्टो ाक्ष्मणमुवाच। लक्ष्मण! वैदेह्या मृगगतां स्पृहां पश्य। ूपश्रेष्ठतयाद्यैष मृगो न जीविष्यति। नास्मिन् वने न नन्दनवने । चैत्ररथे चास्य समो मृगो भवति। पृथिव्यां कुतो भवति? ातिलोमानुलोमानः कनकबिन्दुभिश्चित्रा रोमराजयो मृगशरीरे ोभन्ते। जृम्भमाणस्यास्य मुखान्निस्सरन्तीं दीप्तामग्निशिखोपमां ाघात् शतह्रदामिव जिह्वां पश्य। इन्द्रनीलनिर्मितचषकाकारमुखसम्पुटः ाङ्खमुक्तानिभोदरो वर्णनाशक्योऽसौ मृगः कस्य मनो न ोभयेत्? कनकप्रभं नानारत्नमयं दिव्यमिदं रूपं दृष्ट्वा कस्य ानो विस्मयं न व्रजेत्? अरण्ये मृगयां चरन्तो राजानो मांसहेतो-र्निनुनैपुण्यप्रदर्शनार्थं च मृगान् घ्नन्ति। अरण्ये मृगयोद्यमेन ानानि मणिरत्नसुवर्णमया विविधा धातवश्च विचीयन्ते। अरण्येषु

लभ्यं सर्वं धनं नृणां तथा भवति यथा मानवानां मनः– संकल्पिता अफला अर्थाः सर्वे शुक्रस्य कोशं* पूरयन्ति। लक्ष्मण! अर्थी येनार्थसंपादनप्रयत्नेनाविचारयन् संव्रजति तमेवार्थमर्थशास्त्रज्ञा अर्थसंपादननिपुणाश्चार्थं प्राहुः। एतस्य मृगरत्नस्य श्रेष्ठायां काञ्चनत्वचि मया सह सीतोपवेक्ष्यति। कदलीप्रियकप्रवेण्यविमृगचर्माणि मृदुस्पर्शेऽस्य मृगस्य चर्मणः सदृशानि न भवन्तीति ममाभिप्रायः। श्रीमानेष मृग आकाशे मृगशिरोनक्षत्ररूपो मृगो द्वावेव दिव्यौ। अथ वा यथा त्वं वदसि यद्येषा राक्षसस्य माया भवेत् तर्हि मयास्य वधः कर्तव्यः। दुष्टबुद्धिनानेन क्रूरेण मारीचेन पूर्वमरण्ये मुनिपुङ्गवा हिंसिताः। मृगयालग्ना बहवो राजानः अनेनाभियुज्य निहताः। तस्मादयं मृगो वध्यः। पूर्वमस्मिन् वने वातापिस्तपस्विनः परिभूयोदरस्थः अश्वतरीं स्वगर्भ इव द्विजान् हन्ति स्म। स वातापिश्चिरात् कदाचिल्लोभात्+ तेजसा युक्तं महामुनिमगस्त्यमासाद्य तस्य भक्ष्यो बभूव। उदरं विदार्य पुनरुत्थातुं पूर्वरूपं कर्तुकामं तं वातापिं भगवानगस्त्यो विहस्येदमब्रवीत्। वातापे! भूलोके द्विजश्रेष्ठास्त्वया अविगणय्य स्वतेजसा परिभूताः। तस्मात् त्वं जीर्णोऽसि। एवमेव तद् रक्षो न जीवेत्। यो राक्षसो धर्मनित्यं जितेन्द्रियं मद्विधमभियुज्येत स मामासाद्यागस्त्येन वातापिरिव हतो भवेत्। लक्ष्मण! त्वमिह सन्नद्धो भव। सावधानो मैथिलीं रक्ष। सीताया रक्षणमेवावयोरवश्यकर्तव्यम्। इमं मृगमहं हनिष्यामि ग्रहीष्यामि वा। मृगमानेतुमिदानीमेव गच्छामि। मृगत्वचं स्पृहयन्तीं वैदेहीं पश्य। त्वचः सौन्दर्येणार्यं मृगोऽद्य न भविष्यति। सीतया

---

* इयं पुराणप्रसिद्धिः। + Cr लोके। ग्राह्यः – लोभात्।

सहाश्रमे त्वयाप्रमत्तेन भवितव्यम्। शीघ्रमेवेमं पृषतमेकेन सायकेन हत्वा चर्मादायैष्यामि। मैथिल्याः पार्श्वतः स्थित्वा प्रतिक्षणं सर्वतः शङ्कितः समर्थेनातिबलेन बुद्धिमता पक्षिणा जटायुषा सहाप्रमत्तो भव।

४२

तथा रामो भ्रातरं समादिश्य स्वर्णमयत्सरुमसिं बबन्ध। त्रिविनतं धनुरादाय द्वौ कलापावाबध्य जगाम। आपतन्तं रामं निरीक्ष्य मृगस्त्रासादन्तर्हितो भूत्वा वञ्चयन् पुनः सन्दर्शने बभूव। रामो बद्धासिर्धनुरादाय यतो मृगस्ततः प्रदुद्राव। आत्मानमवेक्ष्यावेक्ष्य महावने धावन्तं तं मृगं रूपेणाग्रतो द्योतमानमिवापश्यत्। कदाचिदिषोः पातादतिवृत्तं लोभयान*मपश्यत्। शङ्कितं समुद्भ्रान्तमम्बरे उत्पतन्तमिवापश्यत्। छिन्नमेघैरावृतं शारदं चन्द्रमण्डलमिव केषुचिद् वनोद्देशेषु दृश्यमदृश्यं च ददर्श। मृगो मुहूर्तात् समीपे ददृशे मुहूर्ताद् दूराच्च। दर्शनाददर्शनाच्च रामं दूरमपाकर्षत्। तेन मोहितो रामो विवशः क्रुद्धः सुश्रान्तश्छायामाश्रित्य शाद्वलेऽवतस्थे। अनुपदं स मृगो वन्यैर्मृगैः परिवृतोऽदूरात् प्रत्यदृश्यत। तदा रामस्तं दृष्ट्वा हन्तुं कृतनिश्चयो बभूव। सुदृढे चापे प्रकाशमानं पन्नगमिव ब्रह्मविनिर्मितं शरं संधाय विकृष्य मुमोच। अशनिसन्निभः स शरोत्तमो मृगरूपस्य तस्य शरीरं+ विनिर्भिद्य मारीचस्य हृदयमेव बिभेद। शरातुरो मारीचः अल्पजीवितो भैरवं विनदन् तालमात्रमुत्पत्य धरण्यां न्यपतत्। म्रियमाणो मारीचस्तां कृत्रिमां तनुं जहौ। ततः सः अयमेव रावणोक्तोपायस्यावसर इति विज्ञाय रामकण्ठस्वरसदृशेन स्वनेन हा सीते हा लक्ष्मण इत्याचुक्रोश। स मारीचस्तेनातुल्यशरेण

---

* अनित्यो मकारागमः। गो. + Cr स भृशम्। ग्राह्यः – शरीरम्।

मर्मणि निर्विद्धस्तन्मृगरूपं त्यक्त्वा राक्षसं रूपमास्थितो जीवितं त्यजन् सुमहाकायं चक्रे। स विचित्रकेयूरः सर्वाभरणभूषितो महादंष्ट्रो राक्षसो बभूव। घोरदर्शनं भूमौ पतितं तं दृष्ट्वा लक्ष्मणस्य वचः स्मरन् रामः सीतां प्रति चिन्तापरो बभूव। सोऽयं राक्षसो हा सीते लक्ष्मण इत्येवं महास्वरमाक्रुश्य ममार। श्रुत्वा सीता कथं भवेत्? लक्ष्मणः कामवस्थां गमिष्यतीति संचिन्त्य भयेन हृष्टतनूरुहो बभूव। मृगरूपं राक्षसं हत्वा तत्स्वरं च श्रुत्वा रामो विषादजेन तीव्रेण भयेनाविष्टो बभूव। तदा सः अन्यं पृषतं निहत्य मांसमादाय त्वरमाणो जनस्थानाभिमुखः ससार।

## ४३

भर्तृस्वरसदृशं तमार्तस्वरं वनादागतं श्रुत्वा सीता लक्ष्मणमुवाच। गच्छ। रामस्य समाचारं जानीहि।परमार्तस्य भृशं क्रोशतो रामस्य स्वरो मया श्रुतः। मम हृदयं जीवितं वा स्थाने नावतिष्ठते। सिंहानां वृषभमिव राक्षसानां वशं गतमरण्ये आक्रन्दमानं भ्रातरं त्रातुमर्हसि। तथोक्तोऽपि भ्रातुः शासनं स्मरन् लक्ष्मणो न ययौ। तदा कुपिता जनकात्मजा तमुवाच। सौमित्रे! त्वमस्यामवस्थायां भ्रातरं नाभिपत्स्यसे। भ्रातुर्मित्ररूपेण शत्रुवदसि। मत्कृते त्वं रामविनाशमिच्छसि। रामस्य कष्टमेव ते प्रियं मन्ये। भ्रातरि ते स्नेहो नास्ति। तेनैव तमपश्यन् विस्रब्धं तिष्ठसि। राम एवास्माकं मुख्यः। तमनुसृत्य त्वमिहागतोऽसि। तस्मिन् रामे संशयं प्राप्ते मयेह त्वया रक्षितया किं प्रयोजनम्? सम्प्रति मम रक्षणाद् रामरक्षणं ते प्रधानकर्तव्यम्। इति ब्रुवाणां बाष्पशोकपरिप्लुतां त्रस्तां मृगवधूमिव स्थितां वैदेहीं लक्ष्मण

ऽवाच। देवि! देवेषु मनुष्येषु गन्धर्वेषु पक्षिषु राक्षसेषु पिशाचेषु
केन्नरेषु मृगेषु दानवेषु च न स विद्येत यो वासवोपमं रामं
ातियुध्येत। रामः समरे अवध्यः। त्वमेवं वक्तुं नार्हसि। रामं
वेनास्मिन् वने त्वां हातुं नोत्सहे। बलवतां सेनाभिरपि सेश्वरैः
ामरैः समुद्युक्तैस्त्रिभिर्लोकैरपि तस्य बलमनिवार्यम्। तव हृदयं
नेर्वृतमस्तु। अयं सन्तापस्त्यज्यताम्। तव भर्ता मृगोत्तमं हत्वा
ीघ्रमागमिष्यति। स स्वरो रामस्य नास्ति। कश्चिद् दैवतो*
ऽपि तथाक्रुष्टवानिति न मन्ये। सा तस्य रक्षसो
ान्धर्वनगरप्रख्या माया। त्वं महात्मना रामेण मयि न्यस्ता। त्वां
यक्तुं नोत्सहे। जनस्थाने खरस्य राक्षसानां च वधाद् वयं
नेशाचरैः कृतवैराः स्मः। महारण्ये हिंसारता राक्षसा विविधा
ाचो विसृजन्ति। ततश्चिन्तयितुं नार्हसि। एवं लक्ष्मणेनोक्ता
ीता क्रुद्धा संरक्तलोचना लक्ष्मणं परुषं वाक्यमब्रवीत्। अनार्य!
ःयाप्रसक्तिरहित!+ नृशंस! कुलपांसन! अहं तव प्रियं मन्ये।
ान हेतुनैवं प्रभाषसे। नित्यं प्रच्छन्नचारिषु नृशंसेषु त्वद्विधेषु
ात्रुषु पापकर्म भवेदिति न चित्रम्। सुदुष्टस्त्वमेकः प्रतिच्छन्नो
मम हेतोर्भरतेन प्रयुक्तो वा एकं रामं वनेऽनुगच्छसि। तव
ा भरतस्य वा मनोरथो न सिध्यति।++ पद्मपत्रनिभेक्षणमिन्दीवरश्यामं
ामं भर्तारमाश्रित्य पृथग्जनं कथं कामयेय? तव समक्षं प्राणान्
यक्ष्यामि। संशयो नास्ति। रामं विना क्षणमपि न जीवामि।
वेजितेन्द्रियो लक्ष्मणः सीतया इति रोमहर्षणं परुषं वाक्यमुक्तः

---

* दैवतशब्दः पुंलिङ्गे प्रयुक्तः। तथा मृच्छकटिके ९, १५ श्लोके च।

+ Cr अनार्य करुणारम्भ। ग्राह्यः – अनार्याकरुणारम्भ।

++ ग्राह्या– तन्न सिध्यति सौमित्रे तव वा भरतस्य वा।

प्राञ्जलिस्तामब्रवीत्। मैथिलि! उत्तरं वक्तुं नोत्सहे। भवती मम दैवतम्। अप्रतिरूपं वाक्यं स्त्रीषु न चित्रम्। एष नारीणां स्वभावः। एवमेव लोके दृश्यते। स्त्रियो विमुक्तधर्माणश्चपलास्तीक्ष्णा भेदकराश्च। न्यायवादी अहं त्वया यथा परुषं वाक्यमुक्तो मे साक्षिभूताः सर्वे वनेचरा देवा उपशृण्वन्तु। धिक् त्वाम्। स्त्रीत्वाद् दुष्टस्वभावेन त्वं गुरुवाक्ये व्यवस्थितं मां यदेवं विशङ्कसे ततः प्रणश्य। यत्र रामोऽस्ति तत्र गमिष्यामि। समस्ता वनदेवतास्त्वां रक्षन्तु। घोराणि यानि निमित्तानि मे प्रादुर्भवन्ति तानि वीक्ष्य पुनरागतस्त्वां रामेण सह पश्येयं न वेति न जाने। एवं लक्ष्मणेनोक्ता सीता रुदती तीव्रं प्रत्युवाच। रामेण विना गोदावरीं प्रवेक्ष्यामि। कण्ठमाबन्धयिष्ये। पर्वतादधः अवप्लुत्यात्मनो देहं त्यक्ष्यामि। विषं पास्यामि। अग्निं प्रवेक्ष्यामि। न तु रामादन्यं पुरुषं पदापि स्प्रक्ष्यामि। इति लक्ष्मणमाक्रुश्य दुःखपूर्णा सीता रुदती पाणिभ्यामुदरं प्रजघान। एवं रुदतीं तां लक्ष्मण आश्वासयामास। सा तं किमपि नोवाच। ततो लक्ष्मणः सीतामभिवाद्य कृताञ्जलिरभिमुखं गत्वा पुनर्नमस्कृत्य* बहुशो मैथिलीमन्वीक्षमाणो रामस्य समीपं जगाम।

## ४४

सीतया परुषमुक्तो लक्ष्मणः कुपितो भृशं रामदर्शनं विकाङ्क्षन् अह्नाय प्रतस्थे। अन्तरं प्रतीक्षमाणो रावणः अवकाशं प्राप्य परिव्राजकवेषं धृत्वा वैदेहीमुपजगाम। मृदुकाषायवस्त्रसंवीतः

---

* सम्प्रति प्रचलितेषु चलच्चित्रादिरामायणेषु अत्र लक्ष्मणो भूम्यां रेखात्रयं कृत्वा कथंचिदपि तन्नातिक्रमितव्यमिति सीतामादिशति। परन्त्वियं घटना कस्यामपि वाल्मीकिरामायणप्रतौ न विद्यते।

शिखां छत्रमुपानहौ धृत्वा वामांसे त्रिदण्डं कमण्डलुं चावसज्य परिव्राजकवेषेण सीतासमीपं ययौ। अतिबलो रावणो वने भ्रातृभ्यां रामलक्ष्मणाभ्यां रहितां तां चन्द्रसूर्याभ्यां रहितां सन्ध्यां महत् तम इवाससाद। भृशदारुणो रावणो रामपत्नीं बालां सीतां शशिना हीनां रोहिणीमङ्गारकः शनैश्चरो वा क्रूरो ग्रह इवापश्यत्। तमुग्रं पापकर्माणं समीक्ष्य जनस्थाने वृक्षा न प्रचलन्ति स्म वायुर्न वाति स्म। शीघ्रस्रोता गोदावरी वीक्षमाणं रक्तलोचनं तं दृष्ट्वा भयान्मन्दं गन्तुमारेभे। अमङ्गलस्वभावो रावणो भर्तारमनुशोचन्तीं सीतां मङ्गललक्ष्येण संन्यासिरूपेण शनैश्चरश्चित्रामिवाभ्यवर्तत। तृणैरिव कूपो भव्यरूपेणावृतः स पापो यशस्विनीं रामपत्नीं वैदेहीं प्रेक्ष्य तस्थौ। दुष्टचेताः स राक्षसः शुभां रुचिरदन्तोष्ठीं पूर्णचन्द्रनिभाननां पर्णशालायामासीनां बाष्पशोकाभिपीडितां पद्मपलाशाक्षीं पीतकौशेयवासिनीं तां वैदेहीमभ्यगच्छत्। मन्मथशराविष्टः स रावणो वेदमन्त्रान् पठन् जनशून्ये प्रदेशे प्रश्रितं वाक्यमब्रवीत्। लोके उत्तमां स्त्रियं पद्मालयरहितां श्रियमिव वपुषा विभ्राजमानां तां रावणः प्रशशंस। काञ्चनवर्णाभे! पीतकौशेयवासिनि! पद्मतुल्यमुखनेत्रपाणिपादयुता त्वं शुभपद्ममालिनी पद्मलतेव भाससे। का त्वम्? त्वं विष्णुपत्नी भूमि*रथवा श्रीः शुभा कीर्तिः मङ्गलप्रदा लक्ष्मीरप्सरा ऐश्वर्याधिष्ठानदेवता उत स्वेच्छाचारिणी रतिः का? तव दशनाः समाः शिखरिणः स्निग्धाः पाण्डुराश्च सन्ति। नेत्रे विशाले विमले रक्तान्ते कृष्णतारके च स्तः। तव जघनं विशालं पीनं

---

* ह्रीः विष्णुपत्नी भूमिः। ह्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रुतेः इति गोविन्दराजः।

च। ऊरू करिकरोपमौ। श्रेष्ठमणिमयाभरणौ ते पयोधरौ प्रवृद्धौ वृत्तौ संहतौ पुष्टौ पीनोन्नतमुखौ मनोहरौ तालफलोपमौ च स्तः। चारुस्मिते! चारुदति! चारुनेत्रे! विलासिनि! रामे! अम्भसा नदी कूलमिव मे मनो हरसि। मुष्टिग्राह्यमध्या सुकेशी संहतस्तनी चासि। महीतले वा अन्यत्र देवी गन्धर्वी यक्षी किन्नरी वा एवंरूपा नारी मया पूर्वं न दृष्टा। लोकेषु अग्र्यं ते रूपं सौकुमार्यं वयश्चेह कान्तारे वासश्च मे चित्तमुन्माथयन्ति। सा त्वमस्माद् देशादन्यत्र गच्छ। भद्रं ते। इह वस्तुं त्वं नार्हसि। अयं घोराणां कामरूपिणां राक्षसानां वासः। प्रासादोपरिभागा रम्याणि संपन्नानि सुगन्धीनि नगरोपवनानि च त्वया संचरितुं योग्यानि। शोभने!माल्यं पानं वस्त्रं च त्वदुपभुक्तमेव वरं मन्ये। तव संगतमेव पुरुषं वरं भर्तारं मन्ये। वरारोहे! त्वं का भवसि? रुद्राणां मरुतां वसूनां वा? त्वं मे देवता प्रतिभासि। इह गन्धर्वा देवाः किंनरा वा न गच्छन्ति। अयं राक्षसानां वासः। त्वं कथमिहागतासि? इह शाखामृगाः सिंहा द्वीपिनो व्याघ्रा मृगा ऋक्षास्तरक्षवः कङ्काश्च विचरन्ति। तेभ्यः कथं त्वं न बिभेषि? अस्मिन् महारण्ये घोराणां तरस्विनां मदकुञ्जराणां कथं त्वमेका न बिभेषि? कल्याणि! त्वं का कस्यासि? कुत आगता? किंनिमित्तं घोरान् राक्षससेवितान् दण्डकान् चरसि? दुरात्मना रावणेनेति प्रशस्ता वैदेही द्विजातिवेषेणागतं तं रावणं दृष्ट्वा सर्वैरतिथिसत्कारैः पूजयामास। तदा पूर्वमासनं समर्प्य पाद्यं दत्त्वा सौम्यवद् दृश्यमानं तं भोजनं सिद्धमित्युवाच। काषायकमण्डलुधारिणं ब्राह्मणवेषेणागतं तं सौम्यं प्रशान्तं सीता मन्यते स्म। अतिथिरूपेणागतत्वात् स

द्वेष्टुमशक्यः। तस्मात् सा तं ब्राह्मणवन्न्यमन्त्रयत। ब्राह्मण! इयं बृसी। सुखमास्यताम्। इदं पाद्यं प्रतिगृह्यताम्। इदमुत्तमं वनजातं त्वदर्थं सिद्धम्। जोषमुपभुज्यताम्। इति साब्रवीत्। एवं निमन्त्र्यमाणो रावणः सर्वं संपन्नमिति आदरेण भाषमाणां रामपत्नीं मैथिलीमात्मवधाय हर्तुं मनसि निश्चिकाय। तदा सुवेषं मृगयागतं सहलक्ष्मणं पतिं प्रतीक्षमाणा पुनः पुनः सर्वतो वीक्षमाणा सीता हरितं तन्महद् वनमेव ददर्श। रामलक्ष्मणौ तु न ददर्श।

## ४५

तदा जिहीर्षुणा परिव्राजकरूपेण रावणेन पृष्टा वैदेही स्वयं स्वपरिचयमकथयत्। अतिथिर्ब्राह्मणश्चायमनुक्तो मां शपेतेति मुहूर्तं ध्यात्वा सोवाच। द्विजोत्तम! भद्रं ते। अहं मिथिलाधिपतेर्महात्मनो जनकस्य दुहिता नाम्ना सीतास्मि रामभार्या च। संवत्सरं* राघवाणां निवेशने मानुषान् भोगान् भुञ्जाना सर्वकामसमृद्धिमती उषितास्मि। ततः संवत्सरादूर्ध्वं राजा दशरथो मन्त्रिभिः समेतो मे पतिं राममभिषेचयितुं सममन्यत। रामस्याभिषेचने संभ्रियमाणे कैकेयी नामास्मत्श्वश्रूः पतिं वरं ययाचे। कैकेयी मे श्वशुरं पूर्वकृतोपकारेण निर्बध्य सत्यसन्धं भर्तारं मम भर्तुः प्रव्राजनं भरतस्याभिषेकं द्वावयाचत। यदि रामोऽद्याभिषिच्यते न भोक्ष्ये न स्वप्स्यामि कथञ्चन न पास्यामि। एष मे जीवितस्यान्तः। इति ब्रुवाणां कैकेयीं मानदः स मे श्वशुरस्ते बहुविधान्युत्तमवस्तूनि दास्यामि। रामाभिषेकं मा विहन्या इति प्रार्थयामास। सा तु तां याच्ञां न स्वीचकार। महातेजा मम

* विवाहानन्तरं सीतारामौ संवत्सरमयोध्यायामूषतुः। सप्तदशवर्षो रामो विवाहकाले। ऊनषोडशवर्षो (१९-२) विश्वामित्रेण सह गमनसमये। इति Cr.

भर्ता पञ्चविंशतिवर्षवयाः*। स राम इति लोके प्रथितो गुणवान् सत्यवान् शुचिर्विशालाक्षो महाबाहुः सर्वभूतहिते रतश्च। अभिषेकाय पितुः समीपमागतं मम पतिं कैकेयी द्रुतमेवमुवाच। राघव! तव पित्रा समाज्ञप्तमिदं मे शृणु। अकण्टकमिदं राज्यं भरताय प्रदातव्यम्। त्वया चतुर्दश वर्षाणि वने वस्तव्यम्। प्रव्रज। पितरमनृतान्मोचय। अकुतोभयो दृढव्रतो मम भर्ता रामस्तथेति कैकेयीमुक्त्वा तस्यास्तद् वचश्चकार। दद्यान्न प्रतिगृह्णीयात्। सत्यं ब्रूयान्नानृतम्। ब्राह्मण! एतद् रामस्य निश्चितं श्रेष्ठं व्रतम्। तस्य वैमात्रो भ्राता वीर्यवान् पुरुषश्रेष्ठो लक्ष्मणो नाम समरे सहायश्च। धर्मचारी दृढव्रतो लक्ष्मणो नाम भ्राता धनुष्पाणिर्मया सह प्रव्रजन्तं राममन्वगच्छत्। ते वयं त्रयः कैकेयीकारणेन राज्यात् प्रच्युता ओजसा गम्भीरमरण्यं विचरामः। मुहूर्तं समाश्वस। इह त्वया वस्तुं शक्यम्। पुष्कलं फलमूलमादाय मे भर्तागमिष्यति। ब्राह्मण! सम्प्रति त्वं नाम गोत्रं कुलं** च तत्त्वत आचक्ष्व। एको दण्डकारण्ये किमर्थं चरसि? एवं सीतायां ब्रुवत्यां महाबलो रावणस्तीव्रं प्रत्युवाच। सीते! येन सदेवासुरपन्नगा लोका वित्रासिताः सोऽहं रक्षोगणेश्वरो रावणो नाम। हे प्रशंसनीये! काञ्चनवर्णाभां कौशेयवासिनीं त्वां दृष्ट्वा स्वकेषु दारेष्वासक्तिं नाधिगच्छामि। इतस्ततो मयाहृतानां बह्वीनां सर्वासामुत्तमस्त्रीणां ममाग्रमहिषी भव। मङ्गलं ते भवतु। लङ्का नाम मम महापुरी समुद्रस्य मध्ये सागरेण परिक्षिप्ता पर्वताग्रे निविष्टास्ति। तत्र मया सार्धमुद्यानेषु विहरिष्यसि।

---

* सप्तविंशतिरिति कासुचित् प्रतिषु। प्रक्षिप्तो भवेदयं श्लोक (१०) इति च Cr. ** पूर्वाश्रमनामगोत्रप्रश्नोऽयमिति गोविन्दराजः।

अरण्यवासं च नाभिलषिष्यसि। सीते! यदि मम भार्या भवसि पञ्च सहस्राणि सर्वाभरणभूषिता दास्यस्त्वां परिचरिष्यन्ति। रावणेनैवमुक्ता सुन्दराङ्गी सीता कुपिता तमनादृत्य प्रत्युवाच। महागिरिमिवाकम्प्यं महेन्द्रसदृशं महोदधिमिवाक्षोभ्यं पतिं राममहमनुव्रतास्मि। अहं महाबाहुं महोरस्कं सिंहविक्रान्तगामिनं नृसिंहं सिंहसंकाशं राममनुव्रतास्मि। पूर्णचन्द्राननं राजपुत्रं जितेन्द्रियं पृथुकीर्तिं राममहमनुव्रतास्मि। जम्बुकः सिंहीमिव त्वं सुदुर्लभां मामिच्छसि। यथा सूर्यस्य प्रभा तथा त्वयाहं स्प्रष्टुमशक्या। अल्पायुस्त्वं रामस्य प्रियां भार्यामिच्छन् नूनं बहून् काञ्चनान् पादपान् पश्यसि*। तरस्विनः क्षुधितस्य सिंहस्य आशीविषस्य च मुखाद् दंष्ट्रां ग्रहीतुमिच्छसि। पर्वतश्रेष्ठं मन्दरं पाणिना हर्तुमिच्छसि। कालकूटं विषं पीत्वा क्षेमेण गन्तुमिच्छसि। राघवस्य प्रियां भार्यामधिगन्तुमिच्छन् त्वं सूच्या नेत्रं प्रमृजसि जिह्वया क्षुरं लेक्षि+। रामस्य प्रियां भार्यां प्रधर्षयितुकामस्त्वं कण्ठे शिलामवसज्य समुद्रं तरितुमिच्छसि। सूर्याचन्द्रमसावुभौ पाणिभ्यां हर्तुमिच्छसि। रामस्य कल्याणवृत्तां भार्यामधिगन्तुमिच्छन् त्वं प्रज्वलितमग्निं वस्त्रेणाहर्तुमयोमुखानां शूलानामग्रे चरितुं चेच्छसि। तव राघवस्य च शृगालसिंहयोः कुनदिकासमुद्रयोर्यवाग्रू-श्रेष्ठमद्ययोः** सीसकाञ्चनयोः पङ्कचन्दनवारिणोर्बिडालहस्तिनो-र्वायसवैनतेययोर्जलकाकमयूरयोर्गृध्रहंसयोश्चान्तरमस्ति। हृताप्यहं सहस्राक्षप्रभावे कार्मुकबाणपाणौ रामे स्थिते मक्षिकयावगीर्णं

---

* आसन्नमरणा वृक्षान् स्वर्णमयान् पश्यन्तीति प्रसिद्धिः इति गोविन्दराजः।
+ Cr अक्षि सूच्या प्रमृजसि जिह्वया लोढि च क्षुरम्। ग्राह्यः - त्वं क्षुरं जिह्वया लेक्षि सूच्या स्पृशसि लोचने। ** यवाग्वमृतयोरिति वा।

वज्रमिव ते जरां न गमिष्यामि। साधुभावा सा तन्वी सुदुष्टं तं रजनीचरमेवमुक्त्वा गात्रप्रकम्पाद् वातोद्धता कदलीव विव्यथे। मृत्युसमप्रभावः स रावणस्तां वेपमानामुपलक्ष्य भयमुत्पादयितुमात्मनः कुलं बलं कर्म च पुनः समाचचक्षे।

४६

एवं सीतायां ब्रुवत्यां रुष्टो रावणो ललाटे भ्रुकुटीं कृत्वा परुषं वचः प्रत्युवाच। वरवर्णिनि! अहं वैश्रवणस्य सापत्न्यो भ्राता दशग्रीवः प्रतापवान् रावणो नाम। भद्रं तेऽस्तु। प्रजा मृत्योरिव मम भयाद् भीता गन्धर्वा देवाः पिशाचाः पतगा उरगाश्च विद्रवन्ति। कारणान्तरे क्रोधाद् द्वन्द्वयुद्धे वैमात्रो राजा वैश्रवणो विक्रम्य मया निर्जितः। मद्भयार्तः कुबेर ऋद्धिमत् स्वमधिष्ठानं परित्यज्य पर्वतश्रेष्ठं कैलासमध्यास्ते। तस्य पुष्पकं नाम कामगं शुभं विमानं मया वीर्याद् गृहीतम्। तेन विमानेनाहं विहायसं यामि। संजातरोषस्य मम मुखं दृष्ट्वैव परित्रस्ताः शक्रप्रमुखाः सुरा विद्रवन्ति। अहं यत्र तिष्ठामि तत्र मारुतः शङ्कितो वाति। तीव्रांशू रविश्च भयात् शिशिरांशुः सम्पद्यते। यत्र यत्राहं तिष्ठामि चरामि च तत्र तत्र तरवो निष्कम्पपत्रा नद्यस्तिमितोदकाश्च भवन्ति। समुद्रस्यापरे पारे घोरै राक्षसैः संपूर्णा इन्द्रस्यामरावतीव लङ्का नाम मम शुभा पुरी अस्ति। रम्या सा पुरी पाण्डुरेण विराजता+ प्राकारेण परिक्षिप्ता हेमहर्म्या हेमाङ्गणा वैडूर्यमयतोरणा च। हस्त्यश्वरथसंबाधा तूर्यनादविनादिता सर्वकालफलवृक्ष++ संकुलैरुद्यानैः शोभिता च। हे राजपुत्रि!

---

+ Cr विराजिता। ग्राह्यः – विराजता। ++ Cr सर्वकामफलैः। ग्राह्यः – सर्वकालफलैः।

मनस्विनि! तस्मिन् लङ्कानगरे मया सह वसन्ती मानुषीणां नारीणां भोगान् विस्मरिष्यसि। सुन्दरि! मानुषान् दिव्यांश्च भोगान् भुञ्जाना मानुषस्य गतायुषो रामस्य न स्मरिष्यसि। राज्ञा दशरथेन प्रियं पुत्रं राज्ये स्थापयित्वा ज्येष्टत्वेऽपि यः सुतो मन्दवीर्यो रामस्ततो वनं प्रस्थापितस्तेन राज्यभ्रष्टेन गतचेतसा दीनेन मुनिना रामेण किं करिष्यसि? कामात् स्वयमिहागतं मन्मथशराबिष्टं सर्वराक्षसभर्तारं मां त्वं प्रत्याख्यातुं नार्हसि। मां प्रत्याख्याय चरणप्रणिपतितं पुरूरवसं निराकृत्योर्वशीव पश्चात्तापं गमिष्यसि। एवमुक्ता क्रुद्धा संरक्तलोचना वैदेही रहिते रावणं परुषं वाक्यमब्रवीत्। सर्वभूतनमस्कृतं देवं वैश्रवणं भ्रातरं व्यपदिश्य त्वमशुभं कर्तुं कथमिच्छसि? रावण! कर्कशो दुर्बुद्धिरजितेन्द्रियस्त्वं येषां राजासि ते सर्वे राक्षसा अवश्यं विनशिष्यन्ति। इन्द्रस्य भार्यां शचीमपहृत्य जीवितुं शक्यं रामस्य भार्यां मामपनीय जीवितं नास्ति। मादृशीं धर्षयित्वा पीतामृतस्यापि ते मोक्षो न भवेत्।

४७

सीतावचनं श्रुत्वा प्रतापवान् दशग्रीवो हस्ते हस्तं समाहत्य सुमहद् वपुश्चकार। पुनरुच्चैर्मैथिलीं बभाषे। उन्मत्तया त्वया मम वीर्यपराक्रमौ न श्रुतौ मन्ये। अम्बरे स्थितो भुजाभ्यां मेदिनीमुद्वहेयम्। समुद्रमापिबेयम्। रणे स्थितो मृत्युं हन्याम्। अर्कं रुन्ध्याम्। तीक्ष्णैः शरैर्महीतलं विभिन्द्याम्। उन्मत्ते! कामदं पतिं कामरूपिणं मां पश्य। एवमुक्तवतस्तस्य क्रुद्धस्य रावणस्य वह्निप्रभे पिङ्गलप्रान्ते नेत्रे रक्ते बभूवतुः। स सौम्यं भिक्षुरूपं सद्यः परित्यज्य स्वं यमतुल्यं रूपं भेजे। संरक्तनयनः

तप्तकाञ्चनकुण्डलः स धनुर्बाणान् दधार। महाकायः परिव्राजकच्छद्म विहाय स्वकं रूपं प्रतिपेदे। क्रोधात् संरक्तनयनो जीमूतनिचयप्रभो रक्ताम्बरधरः स्त्रीरत्नं मैथिलीं प्रेक्ष्य तस्थौ। असितकेशान्तां भास्करप्रभासदृशीं वसनाभरणोपेतां मैथिलीमब्रवीत्। त्रिषु लोकेषु विख्यातं भर्तारं यदीच्छसि मामाश्रयस्व। अहं ते सदृशः पतिर्भवामि। चिराय मां भजस्व। श्लाघ्योऽहं त्वयि प्रीणामि। भद्रे! नाहं क्वचित् ते विप्रियं करिष्ये। मानवमात्रस्य रामस्य विषये भावस्त्यज्यताम्। मयि भावः प्रणीयताम्। मूढे! पण्डितमानिनि! यो दुर्मतिः स्त्रिया वचनात् ससुहृज्जनं राज्यं विहाय व्यालानुचरितेऽस्मिन् वने चरति तं राज्याच्च्युतमसिद्धार्थं परिमितायुषं रामं कैर्गुणैरनुरक्तासि? इति मैथिलीमुक्त्वा रावणः खे बुधो रोहिणीमिव तां जग्राह। स तां वामेन करेण मूर्धजेषु दक्षिणेन पाणिना ऊर्वोश्च जग्राह। मृत्युसंकाशं तीक्ष्णदंष्ट्रं महाभुजं गिरिसन्निभं तं दृष्ट्वा वनदेवता भयार्ताः प्राद्रवन्। मायामयो दिव्यः खरयुक्तः खरस्वनो हेमाङ्गो रावणस्य स महारथः प्रत्यदृश्यत। तदा महास्वनो रावणः परुषैर्वाक्यैस्तामभितर्ज्योर्वोर्गृहीत्वा रथमारोपयत्। रावणेन गृहीता सा वने दूरगतं रामं रामेति विचुक्रोश। अथ कामार्तः स रावणः अकामां पन्नगेन्द्रवधूमिव विवेष्टमानां तामादाय वेगेनोत्पपात। तेन ह्रियमाणा सा मतिभ्रष्टेवातुरेव भृशं चुक्रोश। हा लक्ष्मण! महाबाहो! गुरुचित्तप्रसादक! कामरूपिणा रक्षसा ह्रियमाणां मां न जानीषे। हा राम! जीवितं सुखमर्थांश्च त्वं धर्मार्थं परित्यक्तवान्। अधर्मेण ह्रियमाणां मां न पश्यसि। परंतप! अविनीतानां विनेता नन्वसि। एवंविधं पापं रावणं कथं

न शास्सि? अपि अविनीतस्य कर्मणः फलं सद्यो दृश्यते? सस्यानामिव पक्तये संभवतस्तदपि कालमपेक्षते। स त्वं रावण! कालोपहतबुद्धिरेतत्कर्म कृतवान्। रामाद् घोरं जीवितान्तकरं व्यसनमाप्नुहि। धर्मे श्रद्धावतो यशस्विनो धर्मपत्नी अहं ह्रिये। बत! बान्धवैः सहेदानीं कैकेयी सकामास्तु। जनस्थानं पुष्पितान् कर्णिकारांश्चामन्त्रये। रावणः सीतां हरतीति क्षिप्रं रामाय शंसत। पुष्पावृतमुन्नतशिखरवन्तं प्रस्रवणं गिरिमामन्त्रये। रावणः सीतां हरतीति क्षिप्रं रामाय शंस+। हंससारससंघुष्टां गोदावरीं नदीं वन्दे। रावणः सीतां हरतीति क्षिप्रं रामाय शंस+। विविधपादपपूर्णेऽस्मिन् वने यानि दैवतानि सन्ति तेभ्योऽहं नमस्करोमि। भो दैवतानि! मां हृतां भर्तुः शंसत। अत्र यानि कानिचित् सत्त्वानि निवसन्ति तानि सर्वाणि मृगपक्षिगणानपि शरणं यामि। प्राणेभ्योऽपि गरीयसीं ह्रियमाणां प्रियां मामुद्दिश्य विवशा सीता रावणेनापहृतेति भर्तुः शंसत। महाबलो रामो वैवस्वतहृतामपि माममुत्रापि विदित्वा पराक्रम्यानेष्यति। जटायो! मम हरणं यथातत्त्वं सर्वं रामाय लक्ष्मणाय चाख्यातव्यम्।

## ४८

अवसुप्तो जटायुस्तं शब्दं शुश्राव। स क्षिप्रं निरीक्ष्य रावणं वैदेहीं च ददर्श। ततः पर्वतशिखरसमानस्तीक्ष्णतुण्डो वनस्पतिगतः खगोत्तमः शुभां गिरं व्याजहार। दशग्रीव! अहं पुराणे धर्मे स्थितः सत्यसंश्रयो महाबलो गृध्रराजो नाम्ना जटायुः। दशरथात्मजो रामः सर्वस्य लोकस्य राजा महेन्द्रवरुणोपमो लोकानां हिते युक्तः। यां त्वमिह जिहीर्षसि एषा सीता नाम

+ Cr शंसध्वम्। ग्राह्यः – शंस त्वम्।

यशस्विनी लोकनाथस्य रामस्य धर्मपत्नी। धर्मे स्थितो राजा परदारान् कथं परामृशेत्? राजदारा विशेषेण रक्षणीयाः। नीचां मतिं परदाराभिमर्शनात् निवर्तय।परो यदस्य विगर्हयेत् तद् धीरो न समाचरेत्। यथात्मनस्तथान्येषां दाराः परपुरुषस्पर्शाद् रक्ष्याः। रावण! अर्थं कामं धर्मं च शास्त्रेषु असम्यङ्निरूपितं शिष्टा राजानमनुसृत्य व्यवस्यन्ति। धर्मस्य कामस्य+ द्रव्याणां च राजा उत्तमो निधिः।धर्मो वा शुभं वा पापं वा राजमूलं प्रवर्तते। राक्षसराज! पापस्वभावश्चपलश्च त्वं दुष्कृतिः++ स्वर्गलोकविमानमिवैश्वर्यं कथमभिसंप्राप्तः? यो यस्य स्वभावः स परिमार्जितुं नितरा3+मशक्यः। दुष्टात्मनामालये सदुपदेशः (पुण्यम्) (आर्यम्)4+ चिरं न वसति। सदुपदेशाग्रहणात् ते स्वाभाविकीं पापप्रवृत्तिमेवानुसरन्ति। महाबलो धर्मात्मा रामो यदा ते विषये वा पुरे वा नापराध्यति तस्य कथमपराध्यसि? शूर्पणखाहेतोर्जनस्थानगतः खरोऽतिवृत्तो रामेण पूर्वं यदि हतः अत्र रामस्य को दोषोऽस्ति यतस्त्वं तस्य भार्यां हरसि? क्षिप्रं वैदेहीं विसृज। इन्द्रस्य वज्रायुधं वृत्रं यथा तथा रामः अग्निभूतया घोरया दृष्ट्या त्वां मा दहेत्। आशीविषं सर्पं वस्त्रान्ते बद्ध्वा नावबुध्यसे। ग्रीवायां प्रतिमुक्तं कालपाशं न पश्यसि। सौम्य! यो नरं नावसादयेत् स भारो भर्तव्यः। यदरोगं जीर्यते तदन्नमुपभोक्तव्यम्। यत् कृत्वा धर्मो न भवेद् भुवि कीर्तिर्यशो*

---

+ Cr धर्मश्च कामश्च। ग्राह्यः – धर्मस्य कामस्य। ++ Cr दुष्कृती। ग्राह्यः – दुष्कृतिः। 3+ Cr कामस्वभावो। ग्राह्यः – कामं स्वभावो। 4+ Cr दुष्टात्मनामार्यमा वसत्यालये। दुष्टात्मनामार्यमावसत्यालये इति पाठ्यः।

* कीर्तिर्विक्रमादिजनिता प्रथा, यशः सौजन्यजनिता प्रथेति महेश्वरतीर्थः।

वा नोद्भवेत् प्रत्युत शरीरस्य खेदो जायेत तत् कर्म कः समाचरेत्? रावण! पितामहपितृक्रमादागतं राज्यं यथावदनुतिष्ठतो मम जातस्य षष्टिर्वर्षसहस्राणि व्यतीतानि। अहं वृद्धस्त्वं युवा धनुःशरकवचरथवांश्च। तथापि वैदेहीमादाय कुशली न गमिष्यसि। स्वतः प्रमाणां वेदश्रुतिं यथा न्यायोक्तिभिस्तार्किकादयो न हर्तुं शक्ताः* तथा त्वं मम पश्यतो बलाद् वैदेहीं हर्तुं न शक्तः। यदि शूरोऽसि युद्धयस्व। मुहूर्तं तिष्ठ। पूर्वं खरो यथा तथा हतो भूमौ शयिष्यसे। कामं त्वयासकृद् दैत्यदानवाः संयुगे निहताः। तथापि त्वां न चिरात् चीरवासा रामो युधि हनिष्यति। मया किं नु कर्तुं शक्यम्? रामलक्ष्मणौ दूरं गतौ। नीच! तयोर्भीतस्त्वं क्षिप्रं नश्यसि। संशयो नास्ति। मम जीवतस्त्वं सीतां न नेष्यसि। महात्मनो रामस्य तथा दशरथस्य मयावश्यं जीवितेनापि प्रियं कार्यम्। दशकण्ठ! मुहूर्तं तिष्ठ तिष्ठ। पश्य। यथाशक्ति युद्धातिथ्यं प्रदास्यामि। वृन्तात् फलमिव त्वां रथात् पातयेयम्।

## ४९

जटायुषा यथान्यायमित्युक्तस्य क्रुद्धस्य रावणस्य सर्वा विंशतिदृष्टयः अग्निनिभा रेजुः। तप्तकाञ्चनकुण्डलः अमर्षणो रावणः संरक्तनयनः पतगेन्द्रमभिदुद्राव। तस्मिन् महावने तयोर्गृध्रराक्षसयोस्तुमुलः संप्रहारो गगने वातोद्धतयोर्मेघयोरिव सपक्षयोर्द्वयोर्माल्यवत्पर्वतयोरिव चाभवत्**। रावणो जटायुषं

---

* परमप्रमाणभूतो वेदो न्यायसम्मतैर्हेतुभिश्च स्थिरीकृतो यथा केनापि न निराक्रियते तथेति च श्लोको व्याख्यातः। ** माल्यवानिति नाम्ना त्रयः पर्वता रामायणे सन्ति। एको मेरुसमीपे। अन्यो दण्डकारण्ये। अन्यः किष्किन्धासमीपे। एषु द्वयोर्मध्ये प्रवृत्तं युद्धमिवेत्याशयः।

बहुविधैः शरैरभ्यवर्षत्। जटायुर्धैर्येण तेषामस्त्राणामभिमुखो बभूव। महाबलः पतगसत्तमो जटायुस्तीक्ष्णनखाभ्यां चरणाभ्यां रावणस्य गात्रेषु बहुधा व्रणांश्चकार। रावणः क्रोधाद् दशभिः शरैर्जटायुषं बिभेद। जटायुः राक्षसरथे स्थितां बाष्पलोचनां सीतां पश्यन् तान् बाणानचिन्तयित्वा राक्षसं समभिदुद्राव। चरणाभ्यां रावणस्य चापं बभञ्ज। अग्निवत् प्रकाशमानं तस्य कवचं पक्षाभ्यां व्यधुनोत्। काञ्चनकवचान् पिशाचवदनान् खरांश्च जघान। युगन्धरसंपन्नं कामगं मणिहेमालंकृतं तस्य महारथं बभञ्ज। व्यजनैः सह पूर्णचन्द्रप्रतीकाशं छत्रं च बभञ्ज। भग्नधन्वा हताश्वो हतसारथिर्विरथो रावणः सीतया सह भुवि पपात। तद् दृष्ट्वा भूतानि जटायुषं साधु साध्विति प्रशशंसुः। पक्षियूथपं तं जरया परिश्रान्तं दृष्ट्वा रावणो हृष्टो मैथिलीं गृहीत्वा पुनरुत्पपात। तदा जटायुः समुत्पत्य गच्छन्तं रावणमनुसृत्येदमुवाच। अल्पबुद्धे! रावण! वज्रसंस्पर्शबाणस्य रामस्यैनां भार्यां रक्षसां वधाय हरसि। मित्रबन्धुमन्त्रिबलपरिच्छदैः सह पिपासित उदकमिवैतत् सीतापहरणं नाम विषमिश्रितपानीयं पिबसि। कर्मणामनुबन्धमजानन्तः अविचक्षणा यथा शीघ्रमेव विनश्यन्ति तथा त्वं विनशिष्यसि। त्वं कालपाशेन बद्धः। सामिषं बडिशं वधाय निगीर्य यथा मत्स्यस्तथा त्वं क्व गतो मोक्ष्यसे? तवाश्रमधर्षणं राघवौ जातु न क्षमिष्येते। भीरुणा त्वया लोकगर्हितं तस्करकर्म कृतम्। मुहूर्तं तिष्ठ। खरवत् त्वमपि हतो भूमौ शयिष्यसे। पुरुषः परेतकाले यत् कर्म प्रतिपद्यते तदधर्मं कर्मात्मनो विनाशाय त्वं प्रतिपन्नोऽसि। यस्य कर्मणः पापफलं भवेत् तत् कर्मार्हं प्रभवामीति कः खलु कुर्यात्?

ोकाधिपतिः स्वयम्भूरपि न कुर्वीत। वीर्यवान् जटायुरेवं शुभं ाक्यमुक्त्वा रावणस्य पृष्ठे प्रबलं निपपात। तं गृहीत्वाधिरूढो जारोहो दुष्टवारणमिव तीक्ष्णैर्नखैः समन्ततो विरराद। तुण्डेन खैश्च तस्य पृष्ठं विररराद। नखपक्षतुण्डायुधः केशांश्चोत्पाटयामास। ध्रराजेन मुहुर्मुहुस्तथा क्लिश्यमानः स रावणः अमर्षस्फुरितोष्ठः न् प्राकम्पत। वामबाहुना वैदेहीं गाढं गृहीत्वा रावणो जटायुं ीघ्रं करतलेनाभिजघान। तदा जटायुस्तमतिक्रम्य तुण्डेनास्य श वामबाहून् व्यपाहरत्। ततो दशग्रीवः सीतामुत्सृज्य मुष्टिभ्यां रणाभ्यां च जटायुं क्रोधादपोथयत्। ततोऽतुलवीर्ययोः क्षिप्रवरराक्षसमुख्ययोर्मुहूर्तं संग्रामो बभूव। रावणः खड्गमुद्यम्य मस्यार्थे उद्यच्छमानस्य जटायुषः पक्षौ पार्श्वौ पादौ ाच्छिनत्। रौद्रकर्मणा रक्षसा छिन्नपक्षः स जटायुर्हतः त्रल्पावशिष्टप्राणो धरण्यां निपपात। भूमौ पतितं क्षतजार्द्रं तं टायुषं दृष्ट्वा दुःखिता वैदेही स्वबन्धुमिवाभ्यधावत्। ङ्काधिपतिस्तं नीलजीमूतप्रकाशकल्पं सुपाण्डुरोरस्कमुदारवीर्यं ान्तं दावाग्निमिव परिणतं जटायुषं पृथिव्यां ददर्श। ततः सीता वणवेगमर्दितं महीतले निपातितं तं जटायुषं बाहुभ्यां परिष्वज्य रोद।

## ५०

अल्पावशेषजीवितं स्फुरन्तं राघवाश्रमसमीपे पतितं गृध्रं रावणो दर्श। रावणविनिहतं तं वीक्ष्य सीता विललाप। ाक्षिभुजस्पन्दनादिलक्षणज्ञानं पक्षिणामारवस्तेषां वामतो दक्षिणतो र्शनं च नराणां सुखदुःखेष्ववश्यं सूचकं प्रतिदृश्यते। राम! ात्मनो महद् व्यसनं न जानासि। मदर्थं मृगाः पक्षिणश्च

विपदं सूचयन्तो धावन्ति। इति। सुसंत्रस्ता सा राम! लक्ष्मण! मामिदानीं त्राहीति तथा समाक्रन्दद्यथान्तिके तौ जनाश्च तां शृण्वन्तीव। छिन्नभिन्नमाल्याभरणामनाथवद् विलपन्तीं वैदेहीं राक्षसाधिपोऽभ्यधावत्। अन्तकसन्निभो रावणो लतामिव महाद्रुमान् वेष्टमानां तान् बलाद् गृह्णतीं रामेण रहितां राम रामेति क्रोशन्तीं तां वृक्षं मुञ्च मुञ्चेति बहुशः प्रवदन् स्वजीवितान्ताय केशेषु जग्राह। सीतायां प्रधर्षितायां सचराचरं सर्वं जगदमर्यादमन्धेन तमसा संवृतं बभूव। श्रीमान् पितामहो दीनां सीतां परामृष्टां दिव्येन चक्षुषा दृष्ट्वा कार्यं कृतमिति व्याजहार। दण्डकारण्यवासिनः सर्वे परमर्षयः सीतां परामृष्टां दृष्ट्वा पहृष्टा व्यथिताश्च बभूवुः। राम रामेति लक्ष्मणेति रुदतीं तामादाय रावण आकाशं जगाम। परिशुद्धस्वर्णाभरणभूषितसर्वाङ्गी पीतकैशेयवासिनी सीता प्रस्फुरत्सौदामिनीव रराज। तस्या उद्धूतेन पीतेन वस्त्रेण रावणः अग्निना दीप्तो गिरिरिवाधिकं परिबभ्राजे। परमकल्याण्यास्तस्यास्ताम्राणि सुरभीणि पद्मपत्राणि विच्युतानि रावणे व्यकीर्यन्त। आकाशे उद्धूतं तस्याः कनकप्रभं कौशेयं संध्यादित्यरागेण ताम्रमभ्रमिवाबभौ। आकाशे रावणाङ्कगतायास्तस्या विमलं मुखं रामं विना विनालं पङ्कजमिव न रराज। सुललाटं सुकेशान्तं पद्मगर्भाभं स्निग्धं शुक्लसुविमलप्रभावद्भिर्दन्तैरलङ्कृतं रुदितव्यपमृष्टास्रं चन्द्रवत् प्रियदर्शनं सुनासं चारुताम्रोष्टं हाटकप्रभं तस्या वक्त्रमाकाशे नीलं जलदं भित्त्वोदितश्चन्द्र इव बभूव। राक्षसेन्द्रभयकम्पितायाः तस्याः शुभं वदनं रामं विना दिवोदितश्चन्द्र इव न शुशुभे। नीलाङ्गं राक्षसाधिपमाश्रिता हेमवर्णा सा मैथिली नीलं मणिमाश्रिता काञ्चनी काञ्चीव

ाशत। पद्मगौरी हेमाभा तप्तकाञ्चनभूषणा सा जानकी
णसमीपे घनान्तिके विद्युदिव शुशुभे। तस्या भूषणघोषेण
ाषो निर्मलनीलतोयद इव रावणो ददृशे। ह्रियमाणाया
ाया: शिरसश्च्युता पुष्पवृष्टिः समन्ततो धरणीतले पपात।
णस्य वेगेन सा पुष्पवृष्टिः समाधूता पुनस्तमेवान्ववर्तत।
ाला नक्षत्रपङ्क्तिरुन्नतं मेरुपर्वतमिव पुष्पपङ्क्तिः रावणं
तोऽवर्तत। वैदेह्याश्चरणाद् भ्रष्टं रत्नभूषितं नूपुरं
ुन्मण्डलसंकाशं मधुरस्वनं पपात। तरुप्रवालरक्ता वैदेही
ाङ्गं राक्षसेश्वरं काञ्चनी कक्ष्या गजमिव प्राशोभयत।
वणानुजो महोल्कामिवाकाशे स्वतेजसा दीप्यमानां सीतामाकाशमार्गेण
ार। तस्या अग्निवर्णानि भूषणानि सघोषाणि अम्बरात्
ास्तारा इव महीतले अवाकीर्यन्त। तस्याः स्तनान्तराद्
 टस्ताराधिपद्युतिर्हारो निपतन् गगनाच्च्युता गङ्गेव बभौ।
ातवाताभिहता नानाद्विजगणसंयुताः पादपाः विधूताभिः
खाभिर्मा भैषीरिति व्याजह्रुरिव। ध्वस्तकमलाः त्रस्तमीनजलचरा
न्यो गतोत्साहां सखीमिव मैथिलीमनुशोचन्ति स्म।
ङ्व्याघ्रमृगद्विजाः समन्तादभिसंपत्य रावणं प्रति रोषाच्छायानुगामिनः
ामन्वधावन्। सीतायां ह्रियमाणायां पर्वता जलपाताश्रुमुखाः
ङ्गोच्छ्रितबाहवो विक्रोशन्तीव स्थिताः। ह्रियमाणां वैदेहीं दृष्ट्वा
मान् दिवाकरो दीनः प्रविध्वस्तप्रभः पाण्डुरमण्डल आसीत्।
ा रामस्य भार्यां वैदेहीं रावणो हरति तदा धर्मो नास्ति
यं कुत आर्जवं न हि सौजन्यं च नैवेति सर्वाणि भूतानि
शः पर्यदेवयन्। मृगपोतका वित्रस्ता दीनमुखा अस्रपाताविलेक्षणनयना

दृष्ट्वा वनदेवताः सुप्रवेपितगात्रा बभूवुः। लक्ष्मण रामेति मधुरस्वरेण क्रोशन्तीं बहुशो धरणीतलमवेक्षमाणामाकुलकेशान्तां विप्रमृष्टतिलकां मनस्विनीं तां वैदेहीं दशग्रीव आत्मविनाशाय जहार। तदा रामलक्ष्मणावपश्यन्ती सीता विवर्णवदना भयभारपीडिता बभूव।

## ५१

खमुत्पतन्तं रावणं दृष्ट्वा परमदुःखिता परमभीता रोषरोदनताम्राक्षी ह्रियमाणा सीता भीमाक्षं तमुवाच। नीच! रावण! एकाकिनीं मां चोरयित्वा पलायसे। कर्मणानेन किं न लज्जसे? दुष्टात्मन्! त्वयैव भीरुणा मां हर्तुमिच्छता मम भर्ता मायया मृगरूपेणापवाहितः। मां त्रातुमुद्यतो जटायुश्च विनिपातितः। राक्षसाधम! परमं ते वीर्यं दृश्यते यतो नामधेयं विश्राव्य त्वया युद्धे* न हि जितास्मि। रहिते परस्य स्त्रिया हरणं गर्हितं कर्म कृत्वा कथं न लज्जसे? शौण्डीर्यमानिनस्ते सुनृशंसमधर्मिष्ठं कुत्सितमिदं कर्म लोकेषु पुरुषा निन्दापूर्वकं कथयिष्यन्ति। धिक् ते शौर्यं सत्त्वं च यत् त्वया कथितम्। लोके कुलाक्रोशकरं तवेदृशं चरित्रं धिक्। किं कर्तुं शक्यम्? जवेन धावसि। मुहूर्तमपि तिष्ठ। जीवन् न प्रतियास्यसि। तयो राजकुमारयोश्चक्षुःपथं प्राप्य त्वं ससैन्योऽपि मुहूर्तमपि जीवितुं न समर्थोऽसि। वने प्रज्वलितस्याग्नेः स्पर्शं विहंगम इव त्वं तयोः शरस्पर्शं सोढुं कथंचन न शक्तः। आत्मनः पथ्यं साधु विचार्य मां सम्यङ् मुञ्च। यदि त्वं मां न मुञ्चसि तर्हि मत्प्रधर्षणरुष्टो मम पतिर्भ्रात्रा सह ते विनाशं विधास्यति। मां

* शौर्यप्रदर्शनात्मकस्वयंवरे इत्याशयः।युद्धे भर्तारं विनिर्जित्य भार्याया हरणमधर्म एव। तादृशं कर्म केनापि कृतं भारतेतिहासे न विद्यते।

बलात्कारेण हर्तुं त्वया क्रियमाणः प्रयत्नः सर्वो व्यर्थो भविष्यति। विबुधोपमं भर्तारं राममपश्यन्ती शत्रुवशगाहं चिरं प्राणान् धारयितुं नोत्सहे। त्वमात्मनः पथ्यं श्रेयो वा न समवेक्षसे यतो मर्त्यो मृत्युकाले विपरीतानि सेवते। सर्वेषां मुमूर्षूणां पथ्यं न रोचते। अद्य त्वां कण्ठे कालपाशबद्धं पश्यामि। त्वमस्मिन् भयस्थाने यथा न बिभेषि तथा व्यक्तं हिरण्मयान् वृक्षान् संपश्यसि। रुधिरौघप्रवाहिनीं घोरां वैतरिणीं नदीं भीमं खड्गपत्रवनं च त्वं पश्यसि। शुद्धस्वर्णपुष्पां वैडूर्यप्रवरच्छदामायसैः कण्टकैश्चितां तीक्ष्णां शाल्मलीं द्रक्ष्यसि। हे निर्घृण! महात्मनो रामस्येदृशमपकारं कृत्वा विषं पीत्वेव चिरं जीवितुं न शक्ष्यसि। त्वं दुर्निवारेण कालपाशेन बद्धः। महात्मनो मम भर्तुः क्व गतः शर्म लप्स्यसे? महाहवे भ्रात्रा विना चतुर्दशसहस्राणि राक्षसा येन निहता वीरः सर्वास्त्रकुशलो बली स राम इष्टभार्यापहारिणं त्वां तीक्ष्णैः शरैः कथं न हन्यात्? रावणेन नीयमाना सीता भयशोकसमाविष्टा एवं बहु परुषमुवाच बहु करुणं विललाप च। एवमार्तां दीनभाषिणीं विवेष्टमानां कम्पमानां सीतां पापो रावणो जहार।

## ५२

ह्रियमाणा वैदेही कञ्चन रक्षकमपश्यन्ती गिरिशृङ्गस्थान् पञ्च वानरपुङ्गवान् ददर्श। सम्भवतो रामाय शंसेयुरिति भूषणसहितं कौशेयं (भूषणग्रथितं कौशेयं) तेषां मध्ये मुमोच। सम्भ्रमाद् रावणस्तत् कर्म न लक्षितवान्। पिङ्गाक्षा वानरर्षभा विशालाक्षीं तथा विक्रोशन्तीं तां सीतामनिमिषैरिव नेत्रैर्ददृशुः। रावणः पम्पां नदीमतिक्रम्य लङ्कां पुरीमभिमुखो रुदतीं वैदेहीं गृहीत्वा जगाम।

सुसंहृष्टो रावण आत्मनो मृत्युं तां तीक्ष्णदंष्ट्रां महाविषां भुजगीमुत्सङ्गेनेव जहार। स चापाच्च्युतः शर इव क्षिप्रं वनानि सरितः शैलान् सरांसि च विहायसा समतीयाय। ततस्तिमिनक्रनिकेतं समुद्रमतिचक्राम। वैदेहीहरणवेलायां समुद्रः संभ्रमाल्लुठदूर्मिः रुद्धमीनमहोरगश्च बभूव। तदा अन्तरिक्षगताश्चारणाः सिद्धाश्च दशग्रीव एतदन्त इति वाचः ससृजुः। रावण आत्मनो मृत्युरूपिणीं विवेष्टमानां सीतामेकभुजान्तरे गृहीत्वा लङ्कां पुरीं प्रविवेश। सुविभक्तमहापथां लङ्कां पुरीमभिगम्य जनपूर्णबह्वङ्गणं स्वमन्तःपुरं प्राविशत्। शोकमोहपरायणां सीतां मय आसुरीं मायामिव तत्र निदधे। ममानुज्ञां विना कोऽपि पुरुषः स्त्री वा सीतां मा पश्यतु इति स घोरदर्शनाः पिशाचीरुवाच। मुक्तामणिसुवर्णानि वस्त्राण्याभरणानि चैषा यद्यदिच्छेत् तत् तत् सर्वं देयम्। इयं मम दत्तैवानुज्ञा। या चाज्ञानाद् ज्ञानाद् वा वैदेहीं किञ्चिदप्रियं वदेत् तस्या जीवितं न प्रियम्। प्रतापवान् राक्षसेन्द्रो राक्षसीस्तथोक्त्वा अन्तःपुरान्निष्क्रम्य किं कृत्यमिति चिन्तयन् महावीर्यान् पिशिताशनान् अष्टौ राक्षसान् ददर्श। वरदानमोहितो रावणस्तेषां बलपराक्रमौ प्रशंस्य तानुवाच। नानायुधधराः त्वरिता इतो भूतपूर्वखरालयं हतस्थानं जनस्थानं गच्छत। पौरुषं बलं चाश्रित्य त्रासं दूरत उत्सृज्य निहतराक्षसे शून्ये तत्र जनस्थाने उष्यताम्। मया जनस्थाने निवेशितं खरदूषणयुतं सुमहद् बलं रामेण सायकैर्हतम्। ततो ममापूर्वः क्रोधो धैर्यस्योपरि वर्धते। रामं प्रति सुमहत् सुदारुणं वैरं जातम्। अहं रिपोस्तद् वैरं निर्यातयितुमिच्छामि। संयुगे रिपुमहत्वा निद्रां न लप्स्ये। खरदूषणघातिनं रामं हत्वा निर्धनो

धनं लब्ध्वेव शर्मोपलप्स्ये। जनस्थाने वसद्भिर्भवद्भी रामस्य सर्वा प्रवृत्तिस्तत्त्वत उपनेतव्या। युष्माभिः सर्वैरप्रमादाद् गन्तव्यम्। राघवस्य वधं प्रति सदा यत्नः कर्तव्यः। रणमूर्धनि बहुशो युष्माकं बलं मया ज्ञातम्। अतश्च यूयमस्मिन् जनस्थाने मया नियोज़िताः। ततः अष्टौ राक्षसाः प्रियं महार्थं वाक्यमुपेत्य रावणमभिवाद्य लङ्कां विहाय सहिता अलक्ष्यदर्शना जनस्थानं प्रतस्थिरे। एवं रावणः सीतामपहृत्य सुसंप्रहृष्टो रामेण महद् वैरं प्रसज्य मोहान्मुदितो बभूव।

## ५३

रावणो महाबलानष्टौ राक्षसानादिश्य बुद्धिहैन्यादात्मानं कृतकृत्यममन्यत। वैदेहीचिन्तामग्नः कामबाणैः प्रपीडितः सीतां द्रष्टुमभित्वरमाणो रम्यं गृहं प्रविवेश। स गृहं प्रविश्य राक्षसीमध्ये शोकपरायणां सीतामपश्यत्। अश्रुपूर्णमुखीं शोकपीडितां वायुवेगैः समाक्रान्तामर्णवे मज्जन्तीं नावमिव मृगयूथपरिभ्रष्टां श्वभिरावृतां मृगीमिवाधोमुखीं सीतां रावणोऽभ्येत्यावशां तां बलात्कारेण देवगृहोपमं स्वं गृहं दर्शयामास। हर्म्यप्रासादसंबाधं स्त्रीसहस्रनिषेवितं नानापक्षिगणजुष्टं नानारत्न-समन्वितं शुद्धकाञ्चनैः स्फाटिकै राजतैर्वज्रवैडूर्यचित्रैर्दृष्टिमनोहरैः स्तम्भैर्विराजितं दिव्यदुन्दुभिनिर्ह्रादं शुद्धकाञ्चनतोरणं वेश्म प्रदर्श्य सीतया सह काञ्चनं चित्रं सोपानमारुरोह। तत्र दान्तका राजताश्च प्रियदर्शना गवाक्षा हेमजालावृताः प्रासादपङ्क्तयश्चासन्। स्वभवने सर्वशः सुधया मणिभिर्विचित्रा भूमिकाः प्रादर्शयत्। दीर्घिका नानावृक्षसमन्विताः पुष्करिणीश्च शोकपरायणां सीतां दर्शयामास। पापात्मा रावणः कृत्स्नं श्रेष्ठं गृहं वैदेह्या दर्शयित्वा

पुनरिदमुवाच। सीते! वृद्धान् बालांश्च वर्जयित्वा द्वात्रिंशत्कोट्यो राक्षसा मदधीनाः सन्ति। भीमकर्मणां सर्वेषामहं प्रभुः। एकस्य मम यत्किञ्चिदपि कार्यं कर्तुं सहस्रं राक्षसाः पुरःसरा भवन्ति। सर्वं मम राज्यतन्त्रं जीवितं च त्वयि प्रतिष्ठितम्। त्वं मम प्राणेभ्यो गरीयसी। मया संपादितानां बह्वीनामुत्तमस्त्रीणां त्वमीश्वरी भव। प्रिये! मम भार्या भव। मदुक्तं स्वीकुरु। इदं समीचीनम्। अन्यया बुद्ध्या ते किम्? मां भजस्व। अभितप्तस्य मे प्रसादं कर्तुमर्हसि। शतयोजनेयं लङ्का समुद्रेण परिक्षिप्ता। सेन्द्रैः सुरासुरैरपीयं धर्षयितुमशक्या। लोकेषु यो मे पराक्रमसमो भवेत् तमहं देवेषु यक्षेषु गन्धर्वेषु ऋषिषु च न पश्यामि। राज्यभ्रष्टेन दीनेन तापसेन गतायुषा मानुषेणाल्पतेजसा रामेण किं करिष्यसि? मामेव भजस्व। अहं तव सदृशो भर्ता। यौवनमध्रुवम्। इह मया सह रमस्व। राघवस्य दर्शने बुद्धिं मा कृथाः। तस्य मनोरथैरपीहागन्तुं का शक्तिः? महाजवो वायुराकाशे पाशैर्बन्धुं न शक्यः। दीप्यमानस्याग्नेर्विमला शिखा ग्रहीतुमशक्या। शोभने! लोकत्रयेऽपि यो मद्बाहुपरिपालितां त्वां विक्रमेण नयेत्तं न पश्यामि। त्वं लङ्कायां सुमहदिदं राज्यमनुपालय। अभिषेकोदकक्लिन्ना तुष्टा च मां रमयस्व। पुरा यत्ते दुष्कृतं कर्मासीत् तद् वनवासेन गतम्। तव यः सुकृतो धर्मोऽस्ति तस्य फलमिहाप्नुहि। इह दिव्यगन्धानि सर्वाणि माल्यानि मुख्यानि भूषणानि च मया सह सेवस्व। सुश्रोणि! मम भ्रातुर्वैश्रवणस्य पुष्पकं नाम सूर्यसंकाशं विमानं तरसा मया निर्जितम्। श्रेष्ठं तद् विमानं विशालं रमणीयं चास्ति। तत्र मया सार्धं यथासुखं विहर। पद्मसंकाशममलं चारुदर्शनं ते वदनं

शोकार्तं न भ्राजते। वैदेहि! धर्मलोपकृतेन व्रीडेनालम्। व्यक्तमिदानीं त्वां हर्षो+ऽभिगमिष्यति। एतौ स्निग्धौ ते पादौ मया शिरोभिः परिपीडितौ। क्षिप्रं प्रसादं कुरु। अहं ते वश्यो दासोऽस्मि। अहमाशासे यत् शुष्यमाणेन मया भाषिता इमा वाचः शून्या न भवेयुः। रावणः काञ्चित् स्त्रीं मूर्ध्ना न प्रणमेत्। दशग्रीवो जनकात्मजामेवमुक्त्वा कृतान्तवशमापन्न इयं ममेति मन्यते स्म।

## ५४

तथोक्ता वैदेही शोककर्शितापि निर्भया परपुरुषं प्रत्यभिमुखतया भाषणायुक्तत्वात् तृणमन्तरतः कृत्वा रावणं समादधौ। दशरथो नाम राजा स्थिरो धर्मसेतुरिव सत्यसन्धः परिज्ञातः। तस्य पुत्रो रामस्त्रिषु लोकेषु विश्रुतः। स धर्मात्मा मम पतिर्दैवतं च। इक्ष्वाकूणां कुले जातो महाद्युतिः स रामो भ्रात्रा लक्ष्मणेन सह ते प्राणान् हरिष्यति। यद्यहं त्वया तस्मिन् पश्यति बलाद् धर्षिता स्यां जनस्थाने खरवत् त्वमपि संख्ये हतः शयीथाः। घोररूपा महाबला ये राक्षसास्त्वया प्रोक्ताः सुपर्णे सर्पा इव राघवे एते निर्वीर्याः। तस्य ज्याविप्रमुक्ताः काञ्चनभूषणाः शरा ऊर्मयो गङ्गाकूलमिव ते शरीरं विधमिष्यन्ति। रावण! यद्यपि त्वमसुरैर्वा सुरैर्वा अवध्योऽसि

---

+ Cr आर्षोऽयं दैवनिष्यन्दो। ग्राह्यः– हर्षोऽयं देवि विस्पष्टो। कलकत्ताप्रतावेवमेव वर्तते। आर्षोऽयं पाठस्य आवयोः सबन्धः ऋषिसम्मत इति रावणवचनत्वेन केचन व्याख्यातारः। परन्तु निष्यन्दनिष्पन्दशब्दयोः संबन्धार्थः कथम्? किं च परभार्याहरणं केन ऋषिणा अङ्गीकृतम्? D ग्रन्थानुसारेण मयायमर्थो रचितः।

तथापि सुमहद् वैरमुत्पाद्य जीवन् तस्य न मोक्ष्यसे। बली राघवस्ते जीवितशेषस्यान्तकरः। यूपगतस्य पशोरिव जीवितं ते दुर्लभम्। रोषदीप्तेन चक्षुषा त्वां यदि रामः पश्येत् तदा सद्यस्त्वं निर्दग्धः पराभवं गच्छेः। यो रामश्चन्द्रं नभसो भूमौ पातयेन्नाशयेद् वा सागरं शोषयेद् वा स सीतामिहस्थितां मोचयेत्। त्वं गतायुर्गतश्रीको गतसत्त्वो गतेन्द्रियश्चासि। त्वत्कृतेन दुष्कर्मणा लङ्का वैधव्यसंयुक्ता भविष्यति। तवेदं कर्म सुखोदर्कं न भविष्यति यतस्त्वयाहं बलात् पतिपार्श्वाद् वियोजिता। महाद्युतिर्मम भर्ता रामो वीर्यमाश्रित्य निर्भयो दैवमात्रसहायः शून्ये दण्डकारण्ये वसति। संयुगे स शरवर्षेण तवावयवेभ्यो गर्वं बलं पराक्रमं तथाविधमुत्सेकं चापनेष्यति। प्राणिनां यदा कालचोदितो विनाशो दृश्यते तदा ते कालवशं गताः प्रमाद्यन्ति। राक्षसाधम! मम प्रधर्षणेनात्मनो राक्षसानामन्तःपुरस्य च वधाय स कालस्ते प्राप्तः। यज्ञमध्यस्था स्रुक्स्रुवादिभिर्मण्डिता द्विजमन्त्रपूता च वेदी अशुचिनावमर्दितुं न शक्या। निस्संज्ञमिदं शरीरं बधान घातय वा। इदं मे शरीरं जीवितं वा न रक्ष्यम्। पृथिव्यामात्मनो निन्दाकरं कर्म तु कर्तुं न शक्ष्यामि। क्रोधादेवं मैथिली रावणमुक्त्वा पुनः किञ्चन नोवाच। सीतायाः परुषं रोमहर्षणं वचनं श्रुत्वा रावणस्ततस्तां भयसंदर्शनं वचः प्रत्युवाच। मैथिलि! मद्वाक्यं शृणु। द्वादशमासावधिर्दीयते। अनेन कालेन यदि मां नाभ्येषि ततः सूदास्त्वां प्रातराशार्थं लेशशश्छेत्स्यन्ति। शत्रुरोदनो रावण इति परुषं वाक्यमुक्त्वा ततः क्रुद्धो राक्षसीरुवाच। हे मांसशोणितभोजना घोरदर्शना राक्षस्यः! शीघ्रमेवास्या दर्पं विनयध्वम्। सुघोरास्ता राक्षस्यस्तस्य वचनादेव तं प्रणम्य सीतां

पर्यवारयन्। घोरदर्शनो रावणः पादाघातैर्भूमिं प्रचाल्य दारयन्निव ताः प्रोवाच। इयं मैथिली अशोकवनिकामध्ये नीयताम्। तत्र युष्माभिः परिवारिता गूढं रक्ष्यताम्। तत्र यूयं सर्वा एनां घोरैस्तर्जनैः पुनः सान्त्वैश्च वन्यां गजवधूमिव वशमानयध्वम्। इति रावणेन समादिष्टा राक्षस्यो मैथिलीं परिगृह्य सर्वकालफलै+र्नानापुष्पफलैर्वृक्षैर्वृतां सर्वकालमदैः पक्षिभिः समुपसेवितामशोकवनिकां जग्मुः। शोकपूर्णा सीता हरिणी व्याघ्रीणामिव राक्षसीनां वशं गता। तत्र विरूपनेत्राभिः राक्षसीभिस्तर्जिता सा प्रियं पतिं देवरं च स्मरन्ती भयशोकपीडिता विचेतना बभूव।

## ५५

मृगरूपेण चरन्तं कामरूपिणं मारीचं निहत्य रामस्तूर्णं पथि न्यवर्तत। मैथिलीं द्रष्टुं संत्वरमाणस्य तस्य पृष्ठतः क्रूरस्वनो गोमायुर्विननाद। स तस्य गोमायोर्दारुणं रोमहर्षणं स्वरं श्रुत्वा तत्स्वरेण परिशङ्कितश्चिन्तयामास। बत! गोमायुर्यथा वाश्यते तथाहमशुभं मन्ये। अपि राक्षसैर्भक्षणं विना सीतायाः स्वस्ति स्यात्? मामकं स्वरमनुहृत्य मारीचेन विक्रुष्टं लक्ष्मणो यदि शृणुयात् स तयैव प्रहितो मैथिलीं हित्वा क्षिप्रमिह मत्सकाशमेष्यति। सहितै राक्षसैः सीताया वध ईप्सितः। मारीचः काञ्चनो मृगो भूत्वा मामाश्रमाद् व्यपनीय दूरं नीत्वा मच्छरहतो राक्षसोऽभवत्। अनेनैवाभिप्रायेण हा लक्ष्मण हतोऽस्मीति वाक्यं तेन व्याहृतम्। अपि मया रहिताभ्यां सीतालक्ष्मणाभ्यां स्वस्ति भवेत्? जनस्थाननिमित्तेन राक्षसैः कृतवैरोऽस्मि। बहूनि घोराणि अपशकुनानि चेदानीं दृश्यन्ते। गोमायुनिस्स्वनं श्रुत्वा इत्येवं

---

+ Cr सर्वकामफलैः। ग्राह्यः सर्वकालफलैः।

चिन्तयन् मृगरूपेण रक्षसा आत्मनः अपनयनं प्रति शङ्कितो रामो जनस्थानमाजगाम। दीनमानसं तं मृगपक्षिणः स्ववामतः कृत्वा दीनमासेदुर्घोरान् स्वरांश्च ससृजुः। रामस्तान्यपशकुनानि दृष्ट्वा तत आयान्तं विगतप्रभं लक्ष्मणं ददर्श। विषण्णो दुःखितः स लक्ष्मणः सुविषण्णेन दुःखभागिना रामेणाविदूरे समियाय। तदा ज्येष्ठो भ्राता रामो राक्षससेविते विजने वने सीतां विहायागतं लक्ष्मणं संजगर्हे। दुःखाद् रामो दक्षिणहस्तं* गृहीत्वा मधुरोदर्कं परुषमिदं वचनं लक्ष्मणमुवाच। सौम्य! सीतां विहाय त्वमिहागतोऽसि। त्वया गर्ह्यं कृतम्। कच्चिदिदानीं स्वस्ति भवेत्? सीता विनष्टा राक्षसैर्भक्षिता वा स्यात्। संशयो मे नास्ति। अशुभान्येव मे भूयिष्ठं प्रादुर्भवन्ति। अपि सीतां सप्राणां पुनर्द्रक्ष्यावः? मृगरूपमिदं रक्षो मां प्रलोभ्य दूरं नीत्वा श्रमेण कथञ्चित् हतम्। स मृगो म्रियमाणो राक्षसोऽभवत्। मम मनो दीनमस्ति। वामं चक्षुः स्फुरति। असंशयं सीता नास्ति। मृता हृता ह्रियमाणा वा भवेत्।

## ५६

रामो जनशून्येऽरण्ये वैदेहीं विना आगतं दीनं लक्ष्मणं दृष्ट्वा पर्यपृच्छत्। लक्ष्मण! सीता क्वास्ति? राज्यभ्रष्टस्य मम दुःखसहाया वैदेही क्वास्ति? यां विना मुहूर्तमपि जीवितुमहं नोत्सहे सा सीता क्वास्ति? जनकात्मजां विना पृथिव्या अमराणां वा पतित्वमपि नेच्छेयम्। मम प्राणेभ्यः प्रियतरा वैदेही कच्चिज्जीवति? कच्चिन्ममारण्यनिवासो व्यर्थो न स्यात्?

---

* गृहीत्वा च करं सव्यम्। सव्यशब्दस्य वामदक्षिणार्थौ द्वौ स्तः। कोऽपि दक्षिणहस्तं गृह्णाति। किं च वामहस्ते धनुर्गृहीतं भवति।

सीतानिमित्तं मयि मृते त्वय्ययोध्यां प्रतिनिवृत्ते कैकेयी सकामा सुखिता भविष्यति किम्? मृतपुत्रा दीना मम माता सपुत्रराज्यां सिद्धार्थां कैकेयीं कच्चिन्न सेविष्यते? यदि वैदेही जीवति तदा पुनराश्रमं गमिष्यामि। यदि सा शुभाचारा मृता प्राणांस्त्यक्ष्यामि। आश्रमगतं मां वैदेही प्रहसन्ती पुनर्यदि नाभिभाषते तदा विनशिष्यामि। लक्ष्मण! वैदेही जीवति वा न वा त्वयि प्रमत्ते रक्षोभिर्भक्षिता वा ब्रूहि। सुकुमारी बाला च सा मद्वियोगेन निश्चितं दुःखिता भवति। कपटेन दुरात्मना राक्षसेन लक्ष्मणेत्युच्चैर्वदता तवापि भयं जनितम्। मम सदृशं तं स्वरं श्रुत्वा त्रस्तया तया प्रेषितो नूनं त्वमागतः। वने सीतामुत्सृज्यागतेन त्वया कष्टं कृतम्। प्रतिकर्तुं राक्षसानामन्तरं दत्तम्। खरघातेन राक्षसा दुःखिताः सन्ति। तैः सीता ध्रुवं निहता भविष्यति। अहो! सर्वथाहमस्मिन् व्यसने निमग्नोऽस्मि। किमिदानीं करिष्यामि? ईदृशं मे प्राप्तव्यं शङ्के। इति चिन्तयन् सलक्ष्मणो रामो जनस्थानमाजगाम। भृशं दुःखितमनुजं विगर्हमाणः क्षुधा श्रमात् पिपासया च विनिःश्वसन् शुष्कमुखो विवर्णो राम आश्रमप्रान्तं प्राप्य शून्यं समीक्ष्य तत्र तत्र दृष्ट्वा सीतामदृष्ट्वा प्रहृष्टरोमा व्यथितो बभूव।

## ५७

दुःखार्दितो राम आश्रमादागतं लक्ष्मणं मार्गमध्ये पुनः पप्रच्छ। तव विश्वासाद् वने सा विरहिता। तां मैथिलीमपास्य किमर्थं त्वमागतोऽसि? मैथिलीं त्यक्त्वा अभ्यागतं त्वां दृष्ट्वा मम मनो महत् पापं शङ्कते ध्रुवं व्यथितं च। सीताविरहितं त्वां दूरे मार्गे दृष्ट्वा मे सव्यं नयनं बाहुश्च स्फुरतः। हृदयं

चातीव स्फुरति। एवमुक्तो लक्ष्मणो भूयो दुःखसमाविष्टो दुःखितं राममब्रवीत्। अहं स्वेच्छया स्वयं तां त्यक्त्वेह नागतोऽस्मि। उग्रैर्वचनैस्तयैव प्रचोदित इह त्वत्सकाशमागतोऽस्मि। हा सीते लक्ष्मणेति परित्रायस्वेति च आर्येणेव परिक्रुष्टं वाक्यं मैथिल्या श्रुतम्। तमार्तस्वरं श्रुत्वा तव स्नेहेन भयविह्वला मैथिली रुदती गच्छ गच्छेति मामाह। गच्छेति तया बहुशः प्रचोद्यमानोऽहं त्वत्प्रत्ययान्वितमिदं वचनं तामवोचम्। रामस्य भयावहं रक्षोऽहं न पश्यामि। निर्वृता भव। सर्वमिदमसत्यम्। केनाप्येवमाक्रुष्टम्। सीते! यस्त्रिदशानपि त्रायेत स आर्यो विगर्हितं नीचं त्रायस्वेति वचनं कथमभिदध्यात्? केनापि निमित्तेन केनाप्यन्येन मम भ्रातुः स्वरेण लक्ष्मण मां त्रायस्वेंति उच्चैर्वाक्यं व्याहृतम्। कुनारीवद् व्यथा त्वया न कार्या। वैक्लब्यमालम्ब्यालम्। निरुत्सुका स्वस्था भव। घोरे रणे यो रामं पराजयेत् स पुमान् त्रिषु लोकेषु जातो वा जायमानो वा नास्ति। एवमुक्ता वैदेही परिमोहितचेतना अश्रूणि मुञ्चन्ती मामिदं दारुणमुवाच। भ्रातरि विनष्टे मां प्राप्तुं+ मय्यत्यर्थं पापे एव तव भावो निवेशितः। त्वं मां नावाप्स्यसि। अत्यन्तं क्रोशन्तं रामं नाभ्यवपद्यसे। त्वं भरतेन कृतात् संकेताद् रामं समनुगच्छसि। प्रच्छन्नचारी रिपुस्त्वं रामस्यान्तरप्रेप्सुर्मदर्थमनुगच्छसि। तस्माद् रामं नाभिपद्यसे। वैदेह्या एवमुक्तोऽहं संरब्धः क्रोधाद् रक्तलोचनः प्रस्फुरमाणोष्ठ आश्रमादभिनिर्गतोऽस्मि। एवमुक्तवन्तं सौमित्रिं संतापमोहितो रामोऽब्रवीत्। सौम्य! सीतां विहायागतेन त्वया दुष्कृतं कृतम्। मां रक्षसां विनिवारणे समर्थं जानन्नपि मैथिल्याः क्रोधवाक्येन

+ Cr विनष्टे भ्रातरि प्राप्ते। ग्राह्यः – विनष्टे भ्रातरि प्राप्तुम्।

निस्सृतोऽसि। मैथिलीं विहाय तवागमनेन न परितुष्यामि। क्रुद्धायाः स्त्रियाः परुषवचनं श्रुत्वा त्वमिहागतः। सीतया प्रचोदितः क्रोधवशमागतो मम शासनं नाकरोः। त्वं प्रमादमकरोः। मृगरूपेण येनाहमाश्रमादपवाहितोऽस्मि असौ राक्षसो मया शरेणाभिहतः शेते। मया चापं विकृष्य बाणेन ताडितः स मृगो मृगशरीरं त्यक्त्वा दीनस्वरः केयूरधरो राक्षसोऽभवत्। तदा शराहतेन तेन राक्षसेनार्तया गिरा सुदूरसंश्रवं स्वरं समालम्ब्य सुदारुणं तद् वचनमुदाहृतम्। तेन वचनेन त्वं मैथिलीं विहायेहागतोऽसि।

५८

गच्छतो रामस्य वामलोचनाधोभागः प्रास्फुरत्। सोऽस्खलत्। तस्य वेपथुश्चाजायत। सः अशुभानि निमित्तानि मुहुर्मुहुर्वीक्ष्य अपि सीतायाः क्षेमं स्यादिति व्याजहार। सीतादर्शनलालसस्त्वरमाणो जगाम। शून्यं गृहं दृष्ट्वा उद्विग्नमानसो बभूव। वेगेनोद्भ्रमन्निव हस्तौ विक्षिपन् उटजस्थानं समन्ततः अभिवीक्ष्य तदा सीतया रहितां हेमन्ते ध्वस्तां पद्मिनीमिव श्रिया विरहितां पर्णशालां ददर्श। आश्रमं परितो वृक्षा रुदन्त इवासन्। पुष्पाणि म्लानानि। मृगाः पक्षिणश्च दीनाः। आश्रमस्थानं शोभया रहितम्। वनदैवतानि निर्गतानि। उटजे अजिनकुशवृसीकटा विप्रकीर्णाः। तं शून्यमुटजं दृष्ट्वा रामः पुनः पुनर्विललाप। हृता मृता नष्टा भक्षिता वा भविष्यति। अथवा क्वापि निलीना। अथवा पुष्पफलानयनार्थं वनं जलानयनाय नदीं वा गता भवेत्। इति यत्नान्मृगयमाणो रामो वने प्रियां नाससाद। तदा शोकरक्तेक्षण उन्मत्त इवालक्ष्यत। स वृक्षाद् वृक्षं गिरेर्गिरिं नदान्नदीं च प्रधावन्

विलपंश्च समुद्रतुल्ये शोकपङ्के प्लवमान इवासीत्। हे कदम्बवृक्ष! अपि कदम्बपुष्पप्रिया मे प्रिया काचित् स्त्री त्वया दृष्टा? यदि जानीषे शुभाननां सीतां शंस। बिल्ववृक्ष! स्निग्धपल्लवसंकाशा पीतकौशेयवासिनी बिल्वोपमस्तनी यदि वा दृष्टा शंस। अथवा हे अर्जुनवृक्ष! अर्जुनप्रियां मे प्रियां शंस। जनकस्य सुता यदि जीवति न वा शंस। एष ककुभो वनस्पतिः पल्लवपुष्पैर्भाति। व्यक्तं ककुभोरूं मैथिलीं जानाति। नूनमयं तिलकस्तिलकप्रियां सीतां जानाति। शोकापनुद! अशोकवृक्ष! शोकोपहतचेतसं मां प्रियासन्दर्शनेन क्षिप्रं त्वन्नामानं (मशोकं) कुरु। ताल! पक्वतालफलस्तनी सीता त्वया यदि दृष्टा यदि ते मयि कारुण्यमस्ति वरारोहां मे कथय। हे जम्बूवृक्ष! जाम्बूनदप्रभा सीता यदि त्वया दृष्टा यदि च मे प्रियां विजानीषे निःशङ्कं कथयस्व। अथवा मृग! अपि मृगशाबाक्षीं मैथिलीं जानासि? मृगनेत्रा कान्ता मृगीभिः सहिता भवेत्। गज! गजनासोरूः सा त्वया दृष्टा भवेत्। तां तुभ्यं विदितां मन्ये। वरवारण! आख्याहि। शार्दूल! चन्द्रनिभानना प्रिया सा मैथिली यदि दृष्टा विस्रब्धो भूत्वा मम कथयस्व। तव भयं नास्ति। कमलेक्षणे प्रिये! दूरे किं धावसि? दृष्टासि। आत्मानं वृक्षैराच्छाद्य मां किं न प्रतिभाषसे? वरारोहे! तिष्ठ तिष्ठ। मयि ते करुणा नास्ति किम्? अत्यर्थं हास्यशीला नासि। मां किमर्थमुपेक्षसे? वरवर्णिनि! पीतकौशेयकेन सूचितासि। धावन्त्यपि मया दृष्टासि। यदि सौहृदमस्ति तिष्ठ। किञ्चिद् विचिन्त्य रामः पुनराह। नूनं सा नास्ति। सा व्यापादिता। जीवन्ती कृच्छ्रप्राप्तं मामित्थं नोपेक्षते। व्यक्तं

मध्यसन्निहिते सा आममांसाशनै राक्षसैः सर्वाण्यङ्गानि विभज्य भक्षिता। नूनं शुभदन्तोष्ठं सुनासं चारुकुण्डलं पूर्णचन्द्रनिभं तन्मुखं राक्षसभक्षितं निष्प्रभमभवत्। विलपन्त्याः कान्तायाश्चम्पकवर्णाभा ग्रैवेयशोभिता कोमला शुभा सा ग्रीवा भक्षिता। विक्षिप्यमाणौ पल्लवकोमलौ वेपमानाग्रौ सहस्ताभरणाङ्गदौ तौ बाहू नूनं भक्षितौ। सा बाला सीता रक्षसां भक्षणायैव मया विरहिता। सार्थेन परित्यक्ता बहुबान्धवा स्त्रीव सा भक्षिता। हा लक्ष्मण! त्वं क्वचित् सीतां पश्यसि किम्? भद्रे! हा प्रिये! क्व गतासि? इति पुनः पुनः स विललाप। सीतान्वेषणतत्परो राम एवं विलपन् वनाद् वनं परिधावन् विभ्रमन् उन्मत्तवद् बभूव। अरण्यानि नदीः शैलान् गिरिप्रस्रवणानि च स वेगेन बभ्राम। एवमन्विष्य सीताविषये शिथिलिताशो रामस्तस्या मार्गणे पुनश्च परमं परिश्रमं चकार।

## ५९

रामः शून्यमाश्रमपदं सीतारहितां पर्णशालां प्रविद्धान्यासनानि च दृष्ट्वा तत्र वैदेहीमदृष्ट्वा सर्वशः संनिरीक्ष्य भुजावुद्यम्य* प्राक्रुश्योवाच। लक्ष्मण! वैदेही क्व नु स्यात्? इतः कं वा देशं गता? केनाहृता? केन वा भक्षिता? सीते! वृक्षेणावार्य मां हसितुं यदीच्छसि ते हसितेनालम्। अद्य सुदुःखितं मां भजस्व। विश्वस्तैर्यैर्मृगपोतकैः सह क्रीडसि एते त्वया हीना अस्राविलेक्षणा ध्यायन्ति। सीताहरणजेन महता शोकेन मृतं मां महाराजो पिता नूनं परलोके द्रक्ष्यति। मयाज्ञप्तस्त्वं प्रतिज्ञाय

---

* प्रगृह्य रुचिरौ भुजौ। लोकोक्तिरियम्। दृश्यन्ताम्- महाभारतम् (भण्डारकरप्रतिः) सभा ६१.२६, ६२.३१, ६८.३७ रामा. अर १७.२४

तं कालमपूरयित्वा मत्सकाशं कथमागतः? कामवृत्तमनार्यं मृषावादिनं त्वां धिगिति परे लोके पिता मां व्यक्तं वक्ष्यति। विवशं शोकसंतप्तं मां कीर्तिरनृजुं नरमिवोत्सृज्य सीते क्व गच्छसि? त्वया विरहित आत्मनो जीवितं मोक्ष्ये। सीतादर्शनलालसो राम एवं विलपन् तां न ददर्श। विपुलपङ्कलग्नं कुञ्जरमिव पीडचमानं रामं लक्ष्मणो हितकाम्ययोवाच। हे महाशूर! विषादं मा गमः। मया सह यत्नं कुरु। इदं वनं बहुकन्दरशोभितम्। काननसंचारप्रिया मैथिली जलोन्मत्ता च। सा काननं वा सुपुष्पितां पद्मसरसीं वा प्रविष्टा स्यात्। मीनवञ्जुलपूर्णां नदीं प्राप्ता स्यात्। त्वां मां च वित्रासयितुकामा वा आवयोश्चेष्टितं जिज्ञासमाना वा कानने क्वचिल्लीना स्यात्। तस्या अन्वेषणे क्षिप्रमेव यतावहै। सर्वं वनं विचिनुवः। शोके मनो मा कृथाः। सौहार्दाल्लक्ष्मणेनैवमुक्तो रामः समाहितस्तेन सह विचेतुमुपचक्रमे। तौ वनानि गिरीन् नदीः सरांसि शैलसानूनि गुहाः शिखराणि च निखिलेन विचिन्वन्तौ तां नैव ददृशतुः। सर्वतः शैलं विचित्य वैदेहीमिह पर्वते न पश्यामीति स लक्ष्मणमुवाच। दुःखाभिसंतप्तो लक्ष्मणो दण्डकारण्यं विचरन् भ्रातरमाह। महाप्राज्ञ! विष्णुर्बलिं बद्ध्वा महीमिव त्वं मैथिलीं प्राप्स्यसि। तदा रामो दुःखेनोवाच। सर्वं वनं फुल्लपङ्कजा नद्यो बहुकन्दरनिर्झरोऽयं गिरिश्च विचिताः। प्राणेभ्योऽपि गरीयसीं सीतां न हि पश्यामि। इति विलपन् स गतबुद्धिरुष्णमायतं निःश्वस्य निषसाद। पुनश्च बाष्पगद्गदो हा प्रिये इति विचुक्रोश। प्रश्रिताञ्जलिर्लक्ष्मणस्तं सविनयं बहुप्रकारं च सान्त्वयामास। रामस्तद् वाक्यमनादृत्य पुनः पुनः प्राक्रोशत्।

## ६०

दुःखितो रामो लक्ष्मणमब्रवीत्। शीघ्रं गोदावरीं गत्वा जानीहि सीता पद्मान्यानेतुं यदि तत्र गता। एवमुक्तो लक्ष्मणः क्षिप्रं गोदावरीं जगाम। तीर्थवतीं तां विचित्य राममुवाच। तत्र सीतां नापश्यम्। क्रोशतोऽपि मे प्रत्युत्तरं नास्ति। क्लेशनाशिनी वैदेही यत्रास्ति तं देशमहं न वेद्मि। तच्छ्रुत्वा संतापमोहितो रामः स्वयं गोदावरीं ययौ। नदीमासाद्य सीते क्वासीत्युच्चैः प्रचुक्रोश। वधार्हेण रावणेन सीता हृतेति तत्र स्थितानि भूतानि गोदावरी नदी च रामाय न शशंसुः। ततस्तत्रत्यानि सर्वाणि भूतानि सीताया वार्तामस्मै शंसेति गोदावरीं प्राचोदयन्। परन्तु दुरात्मनो रावणस्य तद् रूपं कर्माणि च ध्यात्वा भयात् सा नदी न शशंस। तत्र सीतावार्तामप्राप्य रामः सौमित्रिमुवाच। जानकीं विनाहं जनकं मातरं च समेत्य कथं नु अप्रियं वचनं वक्ष्यामि?राज्यविहीनस्य कानने काननजातपदार्थैर्जीवतो मे सर्वं शोकं या व्यपानयत् सा सीता क्व नु गता? बन्धुवर्गशून्यस्य जानकीमपश्यतो जाग्रतो मे मन्ये रात्रयो दीर्घा भविष्यन्ति। गोदावरीं जनस्थानं प्रस्रवणं गिरिं सर्वाणि चान्विष्यामि। सीता यदि हि दृश्यते। एवमन्योन्यं संभाषमाणौ तौ वसुन्धरायां पतितं पुष्पचिह्नितं* मार्गमपश्यताम्। महीतले पतितां तां पुष्पपरम्परां दृष्ट्वा रामो लक्ष्मणं परमदुःखेनोवाच। लक्ष्मण! तानीमानि पुष्पाण्यभिजानामि। कानने मया दत्तान्येतानि तया पिनद्धानि। एवमुक्त्वा क्रुद्धः सिंहः क्षुद्रमृगमिव गिरिमब्रवीत्। पर्वत। हेमवर्णां

---

* पतितं पुष्पमार्गम् इति पाठः। पुष्पयुक्तं मार्गं मध्यमपदलोपिसमास इति गोविन्दराजः। पतितपुष्पमार्गमिति पाठान्तरं सुकरम्।

सीतां दर्शय। नो चेत् सर्वाणि ते सानूनि विध्वंसयामि। मम बाणाग्निनिर्दग्धो भस्मीभूतो निस्तृणद्रुमपल्लवः सततमसेव्यो भविष्यसि। लक्ष्मण! चन्द्रनिभाननां सीतां यदि सम्प्रति मे नाख्याति तर्हीमां सरितं शोषयिष्यामि। एवं रुष्टश्चक्षुषा दिधक्षन्निव स्थितो रामो निष्क्रान्तं राक्षसस्य महत् पदं ददर्श। स तत्र सीताया राक्षसस्य च परिक्रान्तं समीक्ष्योद्विग्नहृदयो भ्रातरमुवाच। सौमित्रे! पश्य। वैदेह्या भूषणानां कनकबिन्दवः शीर्णा विविधानि माल्यानि च भूमौ दृश्यन्ते। कनकबिन्दुनिकाशै रक्तबिन्दुभिः सर्वतो धरणीतलमावृतम्। वैदेही कामरूपिभिः राक्षसैर्भित्त्वा भित्त्वा विभक्ता वा भक्षिता वा स्यादिति मन्ये। तस्या निमित्तं विवदमानयोर्द्वयो राक्षसयोरिह घोरं युद्धं बभूव। सौम्य! कस्यापीदं मुक्तामणिचितं तपनीयविभूषितं महद् धनुर्भग्नं धरण्यां पतितम्। बालादित्यसंकाशं वैडूर्यशकलचितं काञ्चनं कस्यापि विशीर्णं कवचं भूमौ पतितम्। शतशलाकं दिव्यमाल्योपशोभितं भग्नदण्डमिदं छत्रं कस्यापि भूमौ निपातितम्। कनककवचाः पिशाचवदना भीमरूपा महाकाया रणे निहता इमे खराः कस्यापि। दीप्तपावकसंकाशो द्युतिमान् समरध्वजवान् कस्यापि साङ्ग्रामिको रथो भग्नः अपविद्धश्च। रथाधारदण्ड*प्रमाणास्तीक्ष्णाग्रास्तपनीयविभूषणा अभिहता इमे बाणाः कस्यापि प्रकीर्णाः पश्य। मम राक्षसैर्वैरं शतगुणं प्रवृद्धम्। तत्तेषां+ जीवितान्तकरं भविष्यति। दीना सीता हृता मृता भक्षिता वा। महावने ह्रियमाणां तां धर्मो नात्रायत। सीतायां भक्षितायां

---

* रथाक्षमात्राः इति पाठः। अपि बाणास्तावद्दीर्घा भवेयुः?

\+ Cr ममेदम्। ग्राह्यः – मम तैः।

हृतायां वा मम लोके के ईश्वराः प्रियं कर्तुं शक्ताः? दयालुर्मनुष्यः शूरो भवतु लोकसृष्टिसमर्थोऽपि भवतु सर्वैरज्ञानादवमन्यते। मृदुं लोकहिते युक्तं दान्तं करुणवेदिनं मां त्रिदशेश्वरा नूनं निर्वीर्यं मन्यन्ते। मां प्राप्य गुणो दोषः संवृत्तः। पश्य। शशिज्योत्स्नां संहृत्यैवोदितो महान् सूर्य इव मम तेजः सर्वान् गुणान् संहृत्याद्यैव+ सर्वभूतानां रक्षसां चाभावाय प्रकाशिष्यते। न यक्षा न गन्धर्वा न पिशाचा न राक्षसा न किंनरा न मनुष्याः सुखं प्राप्स्यन्ति। ममास्त्रबाणसंपूर्णमाकाशमद्य त्रैलोक्यचारिणां निरवकाशं करिष्यामि। पश्य। त्रैलोक्यं सन्निरुद्धग्रहगणं निवारितनिशाकरं विप्रणष्टानलमरुद्भास्करद्युति संवृतं विनिर्मथितशैलाग्रं शुष्यमाणजलाशयं ध्वस्तद्रुमलतागुल्मं विप्रणाशितसागरं प्रलयकालकर्मणा संयुक्तं करिष्यामि।++ यदि देवाः कुशलिनीं सीतां मे न प्रदास्यन्ति तदास्मिन् मुहूर्ते मम विक्रमं द्रक्ष्यन्ति। सर्वभूतानि मम चापगुणोन्मुक्तैर्बाणजालैर्व्याप्तमाकाशं न संचरिष्यन्ति। अद्य मम नाराचैरर्दितं ध्वस्तभ्रान्तमृगद्विजं समाकुलममर्यादं जगत् पश्य। मैथिलीहेतोर्जीवलोकमाकर्ण-पूर्णैर्दुरावारैरिषुभिरपिशाचमराक्षसं च करिष्ये। मम रोषप्रयुक्तानां सायकानां बलमद्य सुरा द्रक्ष्यन्ति। मम क्रोधात् त्रैलोक्ये विप्रणाशिते देवा दैतेयाः पिशाचा राक्षसाश्च न भविष्यन्ति। देवदानवयक्षरक्षसां लोकान् बाणौघैर्बहुधा शकलीकरिष्यामि। सर्वान् लोकान् निर्मर्यादान् करिष्यामि। सर्वभूतेषु जरा मृत्युर्विधिश्च यथा नित्यं न प्रतिहन्यन्ते तथा क्रोधसंयुक्तोऽहं

---

+ ग्राह्या–संहृत्यैव गुणान् सर्वान् मम तेजः प्रकाशते।

++ ग्राह्या – त्रैलोक्यं तु करिष्यामि संयुक्तं कालकर्मणा।

सर्वथा अनिवार्योऽस्मि। यथा पुरा स्थितां सीतां तथा यदि मे न दिशन्ति तदा देवगन्धर्वमनुष्यपन्नगशैलयुतं जगत् परिभ्रमयामि।

## ६१

सीताहरणदुःखितस्तप्यमानः क्रुद्धो रामः सज्यं धनुर्वीक्षमाणो मुहुर्मुहुर्निःश्वसन् सांवर्तकानलवत् सर्वलोकविनाशाय युगान्ते हर इव समस्तलोकदाहाय+ चोद्युक्तो बभूव। तथा अदृष्टपूर्वं संक्रुद्धं रामं दृष्ट्वा लक्ष्मणः प्राञ्जलिः परिशुष्यता मुखेनाब्रवीत्। पुरा मृदुर्दान्तः सर्वभूतहिते रतो भूत्वा क्रोधवशमापन्नः स्वं स्वभावं हातुं नार्हसि। चन्द्रे शोभा सूर्ये प्रभा वायौ गतिर्भुवि क्षमा एतत् सर्वं नियतम्। त्वय्यनुत्तमं यशो नियतम्। सायुधः सपरिच्छदः साङ्ग्रामिकोऽयं रथः कस्य केन कस्य वा हेतोर्भग्नो न जानामि। खुरनेमिक्षतो रुधिरबिन्दुभिः सिक्तः सुघोरोऽयं देशो निर्वृत्तसङ्ग्रामः। अयमेकस्य विमर्दो न तु द्वयोः*। महतो बलस्य वृत्तं पदं न पश्यामि। एकस्य कृते लोकान् विनाशयितुं नार्हसि यतो वसुधाधिपा युक्तदण्डा मृदवः प्रशान्ताश्च। त्वं सर्वभूतानां सदा शरण्यः परमा गतिः। को नु ते दारप्रणाशं साधु मन्येत? यथा यज्ञदीक्षितं सत्पुरुषा नापचिकीर्षन्ति तथा सरितः सागराः शैला देवगन्धर्वदानवाश्च ते विप्रियं न कुर्वन्ति। धनुष्पाणिर्मद्द्वितीयः परमर्षिभिः सहायैः सीताहर्तारमन्वेषितुमर्हसि। समुद्रं पर्वतान् वनानि गुहा नदीः पर्वतप्रवाहान् देवगन्धर्वलोकांश्च यावत् सीताधिगमिष्यते तावत् सावधानौ विचेष्यावः। त्रिदशेश्वरास्ते पत्नीं साम्ना न प्रदास्यन्ति

---

+ Cr हन्तुकामं पशुं रुद्रं क्रुद्धं दक्षक्रतौ यथा। ग्राह्यः – दग्धुकामं जगत् सर्वं युगान्ते च यथा हरम्। * एकस्यैकेन सहैव युद्धमित्यभिप्रायः।

चेत् ततः पश्चात् प्राप्तकालं करिष्यसि। नरेन्द्र! शीलेन साम्ना विनयेन नयेन च सीतां यदि न प्राप्स्यसि ततो हेमपुङ्खैर्महेन्द्रवज्रप्रतिमैः शरौघैः समुत्सादय।

## ६२

ततस्तथा शोकसन्तप्तमनाथवद् विलपन्तं महता मोहेनाविष्टं परिद्यूनमचेतनं तं रामं किञ्चित्कालमाश्वास्य चरणौ पीडयन् लक्ष्मणः संबोधयामास। राम! राज्ञा दशरथेन महता तपसा महता कर्मणा च अमरैरमृतमिव लब्धोऽसि।+ भरतोऽब्रवीद् यद् राजास्मत्पिता तव गुणैर्बद्धस्त्वद्वियोगाद् देवत्वं प्राप। प्राप्तमिदं दुःखं यदि न सहिष्यसे तर्हि प्राकृतः अल्पसत्त्वश्चेतरः कः सहिष्यते? दुःखितो भवान् तेजसा यदि लोकान् धक्ष्यति तर्ह्यार्ताः प्रजाः क्व निर्वृतिं यास्यन्ति? लोकस्वभावोऽयं यत् सर्वस्य प्राणिनो दुःखमागच्छति निर्गच्छति च। नहुषपुत्रो ययातिर्देवेन्द्रस्य सालोक्यं लब्ध्वा पुनश्च शोकमविन्दत्। अस्माकं पितुः पुरोहितस्य वसिष्ठस्याह्ना पुत्रशतं जज्ञे तथैव पुनर्हतं च। जगन्मातुर्लोकनमस्कृताया भूमेश्च चलनं दृश्यते। सर्वं ययोः प्रतिष्ठितं तयोर्लोकनेत्रयोश्चन्द्रसूर्ययोश्च ग्रहणं भवति। पृथिव्यादिमहाभूतानि देवाश्च दैवशक्तेर्न मुच्यन्ते। साधारणानां प्राणिनां का कथा?* शक्रादिष्वपि देवेषु नयानययोः कारणेन सुखदुःखे प्रवर्तेते। तस्मात् त्वं व्यथितुं नार्हसि। नष्टायां

---

+ Cr दशरथेनासील्लब्धो। दशरथेनासि लब्धो इति पाठः अधः सूचिकायामविद्यमानोऽपि B.D प्रतिभ्यां गृहीतः। * श्लोकार्थः सम्यङ् न वेद्यते।गोविन्दराजः सर्वभूतादिदेहिनः इति पठित्वा (६६–११) सर्वभूतान्तर्यामिणः इति व्याख्याति। सा च व्याख्या मनसि न लगति।

हृतायामपि वैदेह्यां प्राकृतोऽन्य इव त्वं शोचितुं नार्हसि। सततं सत्यदर्शिनः अनिर्विण्णज्ञानिनश्च त्वद्विधाः सुमहत्स्वपि कृच्छ्रेषु न हि शोचन्ति। तत्त्वतो बुद्ध्या समनुचिन्तय। महाप्राज्ञा बुद्ध्या युक्ता अदृष्टगुणदोषाणामनिश्चितानां कर्मणां शुभाशुभे विजानन्ति। प्रयत्नमन्तरेण तेषां कर्मणामिष्टं फलं न प्रवर्तते। पुरा त्वमेव मामेवं+ बहुशः अन्वशाः। साक्षाद् बृहस्पतिरपि को नु त्वामनुशिष्यात्? महाप्राज्ञ! तव बुद्धिर्दैवैरपि दुर्ग्रहा। शोकेनाभिप्रसुप्तं ते ज्ञानमहं संबोधयामि। इक्ष्वाकुकुलश्रेष्ठ! त्वं दिव्यं मानुषं चात्मनः पराक्रममवेक्ष्य द्विषतां वधे यतस्व। सर्वनाशकरणेन किं प्रयोजनम्? पापं तं रिपुं विज्ञायोद्धर्तुमर्हसि।

६३

सारग्राही रामः पूर्वजोऽपि लक्ष्मणेनोक्तमात्रो महासारं सुभाषितं प्रतिजग्राह। स प्रवृद्धमात्मनः कोपं संनिगृह्य चित्रं धनुरवलम्ब्य स्थित्वा लक्ष्मणमब्रवीत्। वत्स लक्ष्मण! किं करिष्यावहे? क्व वा गच्छाव? सीतां केनोपायेन प्राप्नुयाम्? एतद् विचिन्तय। तथा परितापार्तं रामं लक्ष्मणोऽब्रवीत्। बहुभी राक्षसैः कीर्णं नानाद्रुमलतायुतमिदं जनस्थानमेव त्वमन्वेषितुमर्हसि। इह गिरिदुर्गाणि उपत्यका अन्तःप्रदेशा घोरा नानामृगगणाकुला गुहाः किंनराणामावासा गन्धर्वभवनानि च सन्ति। उद्युक्तस्त्वं मया सार्धं तान्यन्वेषितुमर्हसि। बुद्धिसंपन्नस्त्वद्विधा महात्मानो वायुवेगैरचला इव न प्रकम्पन्ते। इत्युक्तः क्रुद्धो रामो घोरमर्धचन्द्रवाणं धनुषि संधाय लक्ष्मणेन सह सर्वं तद् वनं विचचार। ततः पर्वतकूटाभं महाभागं द्विजोत्तमं भूमौ पतितं

---

+ Cr मामेव। ग्राह्यः – मामेवं.

क्षतजार्द्रं जटायुषं ददर्श। तं दृष्ट्वा रामो लक्ष्मणमाह। अनेन सीता भक्षिता। अत्र संशयो नास्ति। गृध्ररूपोऽयं राक्षसो व्यक्तं कानने भ्रमति। एष सीतां भक्षयित्वा यथासुखमास्ते। एनं घोरैर्बाणैर्हनिष्यामि। इति क्रुद्धो धनुषि शरं संधाय समुद्रान्तां मेदिनीं चालयन्निव गृध्रमभ्यपतत्। पक्षी सफेनं रुधिरं वमन् रामं सुदीनया वाचा अभ्यभाषत। आयुष्मन्! राम! यां महावने ओषधीमिवान्विष्यसि सा देवी मम प्राणाश्चोभयं रावणेन हृतम्। त्वया लक्ष्मणेन च विरहिता सीता बलीयसा रावणेन ह्रियमाणा मया दृष्टा। सीतां रक्षितुं झटिति तत्समीपमगमम्। रणे रथं छत्रं च विध्वंस्य रावणो मया धरणीतले पातितः। एतदस्य भग्नं धनुः एतत् कवचमयं तस्य भग्नः साङ्ग्रामिको रथः। परिश्रान्तस्य मे पक्षौ खड्गेन छित्त्वा रावणो वैदेहीमादाय विहायसमुत्पपात। रक्षसा पूर्वं निहतं मां त्वं हन्तुं नार्हसि। तदा रामो जटायुषः सीतासम्बन्धिनीं प्रियां वार्तां विज्ञाय गृध्रराजं परिष्वज्य लक्ष्मणेन सह रुरोद। दुर्गमायामेकपद्यामेकाकिनं कथञ्चन निःश्वसन्तं तं जटायुषं समीक्ष्य रामो दुःखिततरः सौमित्रिमब्रवीत्। राज्याद् भ्रंशः वने वासः सीताया नाशो द्विजस्य हतिश्चेदृशं मम दौर्भाग्यमग्निमपि निर्दहेत्। अद्य संपूर्णं महोदधिमपि यदि प्रतरेयं सोऽपि मम दौर्भाग्येन नूनं विशुष्येत्। मयेयं महती व्यसनवागुरा प्राप्ता। सचराचरे लोके मत्तः अभाग्यतरो नास्ति। मम पितृवयस्यो जरान्वितोऽयं जटायुर्मम भाग्यविपर्ययाद् विनिहतो भूमौ शेते। इत्येवं बहुश उक्त्वा सहलक्ष्मणः पितृस्नेहं निदर्शयन् जटायुषं पस्पर्श। निकृत्तपक्षं रुधिरावसिक्तं गृध्रराजं रामः परिरभ्य मम प्राणसमा मैथिली क्वेति वदन् भूमौ निपपात।

६४

क्रूरेण रावणेन भुवि पातितं तं गृध्रं प्रेक्ष्य रामः सौमित्रिमुवाच। मम कार्ये यतमानोऽयं विहङ्गमः संख्ये राक्षसेन हतो दुस्त्यजान् प्राणांस्त्यजति। अस्य शरीरे प्राणो भृशं दुर्बलो+ विद्यते। स्वरहीनो विक्लबश्च समुदीक्षते। जटायो! पुनर्व्याहर्तुं यदि शक्नोषि ते भद्रमस्तु सीताया वार्तामाख्याहि। आत्मनो वधमाख्याहि। केन कारणेन रावणः सीतामहरत्? मया तस्य किमपराद्धमिति मम प्रिया तेन हृता? तस्मिन् काले सा कथमासीत् कानि वाक्यानि च तयोक्तानि? स राक्षसः कथंवीर्यः? कथंरूपः? किंकर्मा? क्व तस्य भवनम्? तात! मे ब्रूहि। ततो दीनात्मा जटायुर्विलपन्तं राममुद्वीक्ष्य भृशं क्षीणया वाचोवाच। सा राक्षसेन्द्रेण रावणेन वातदुर्दिनसंकुलां विपुलां मायामास्थाय विहायसा हृता। स राक्षसः परिश्रान्तस्य मे पक्षौ छित्त्वा वैदेहीमादाय दक्षिणदिशाभिमुखः प्रयातः। राम! मम श्वासो महता कष्टेन प्रसरति। दृष्टिर्भ्रमति। उशीरकृतमूर्धजान् सौवर्णान् वृक्षान् पश्यामि। येन मुहूर्तेन सीतामादाय रावणोऽयासीत् स विन्दो नाम मुहूर्तः। प्रणष्टं धनं तत्स्वामी क्षिप्रं प्रतिपद्यते। इमं विषयं स नाबुध्यत्। बडिशं गृहीत्वा झषवत् स क्षिप्रमेव विनश्यति। त्वया जानकीं प्रति व्यथा न कार्या। रणे तं राक्षसं क्षिप्रं हत्वा वैदेहीं प्राप्स्यसि। रामं प्रति भाषमाणस्यैतावत्पर्यन्तमविगतचैतन्यस्य म्रियमाणस्य गृध्रस्य मुखात् सामिषं रुधिरं सुस्राव। स राक्षसो विश्रवसः पुत्रो वैश्रवणस्य साक्षाद् भ्रातेत्युक्त्वा जटायुः प्राणान् मुमोच।

---

+ Cr अयमस्य। ग्राह्यः अतिखिन्नः।

कृताञ्जलौ रामे ब्रूहि ब्रूहीति ब्रुवति गृध्रस्य शरीरं त्यक्त्वा प्राणा विहायसं जग्मुः। स जटायुः शिरो भूमौ निक्षिप्य चरणौ प्रसार्य स्वं शरीरं धरणीतले विक्षिप्य पपात। ताम्राक्षं गतासुमचलोपमं जटायुं प्रेक्ष्य बहुदुःखितो रामः सौमित्रिमुवाच। रक्षसां वासे बहु-वर्षाणि वसतानेन पक्षिणेह दण्डकारण्ये सुखं चरितम्। दीर्घायुश्चिरकालकार्यव्यग्रोऽयं जटायुरद्य हतः शेते। कालो हि दुरतिक्रमः। सीतां रक्षितुं गतो ममोपकारी अयं गृध्रो बलीयसा रावणेन हतः। पश्य। अयं पतगेश्वरः पितामहपितृक्रमागतं महद् गृध्रराज्यं परित्यज्य मम हेतोः प्राणान् मुमोच। सौमित्रे! शूराः शरण्या धर्मचारिणः साधवः सर्वत्र पशुपक्षिषु च दृश्यन्ते खलु। मत्कृते जटायुषो विनाशो यथा तथा सीताहरणजं दुःखं मां न बाधते। यथा पिता दशरथस्तथायं पतगेश्वरो मे मान्यः। सौमित्रे! काष्ठान्युपहर। पावकं निर्मथिष्यामि। मत्कृते निधनं प्राप्तं गृध्रराजं दिधक्षामि। रौद्रेण रक्षसा हतमिमं जटायुषं चितामारोप्य धक्ष्यामि। पक्षिराज! यज्ञशीलानामग्निहोत्रिणां संन्यासिनां भूमिप्रदायिनां च या गतिस्तां गतिं गच्छ। मया संस्कृतः अनुत्तमान् लोकान् व्रज। धर्मात्मा राम एवमुक्त्वा पतगेश्वरं चितामारोप्य दुःखितः स्वबन्धुमिव ददाह। अथ लक्ष्मणेन सहारण्यं गत्वा स्थूलान् महारोहीन् मृगान् हत्वा जटायुषमुद्दिश्य दर्भान् तस्तार। रोहिमृगमांसान्युद्धृत्य पिण्डीकृत्य रम्ये हरितशाद्वले शकुनाय ददौ। द्विजातिभिः प्रेतस्य मर्त्यस्य स्वर्गगमनार्थं कथितं तं प्रसिद्धं पित्र्यं+ मन्त्रं रामो जजाप। ततस्तावुभौ गोदावरीं नदीं गत्वा तस्मै गृध्रराजायोदकं चक्रतुः।

---

+ Cr क्षिप्रम्। ग्राह्यः पित्र्यम्।

रणे सुदुष्करं यशस्करं कर्म कृत्वा निपातितः स गृध्रराजो महर्षिकल्पेन रामेण संस्कृतः पुण्यां शुभामात्मनो गतिं जगाम।

६५

एवं रामलक्ष्मणौ जटायुषे उदकं कृत्वा प्रस्थितौ सीतामवेक्षमाणौ वने पश्चिमां दिशं जग्मतुः। पुनस्तौ दक्षिणां दिशं गत्वा जनसंचाररहितं पन्थानं प्रतिपेदाते। बहुभिर्गुल्मैर्वृक्षैर्लताभिश्च प्रवेष्टितं सर्वत आवृतं दुर्गं गहनं घोरदर्शनं मार्गं जग्मतुः। वेगेन व्यतिक्रम्य दक्षिणदिशां गृहीत्वा सुभीमं महारण्यं व्यतिययतुः। ततः परं जनस्थानात् त्रिक्रोशं दूरं गत्वा तौ गहनं क्रौञ्चारण्यं विविशतुः। बहुमेघसमुदायप्रख्यं सर्वतः प्रहृष्टमिव दृश्यमानं नानावर्णैः शुभैः पुष्पैर्मृगगणैः पक्षिगणैश्च युतं तद् वनं वैदेहीं दिदृक्षमाणौ तत्र तत्रावतिष्ठमानौ विचिक्यतुः। तदा लक्ष्मणः प्राञ्जली राममुवाच। मम बाहुर्दृढं स्पन्दते। मन उद्विजते। प्रायशः अनिष्टानि निमित्तान्युपलक्षये। आर्य! तस्मात् त्वं सज्जो भव। हितं वचनं कुरुष्व। निमित्तानि सद्यः संभ्रमं मे शंसन्तीव। परमदारुणो वञ्जुलको नामैष पक्षी युद्धे आवयोर्विजयं शंसन्निव विनर्दति। ततस्तयोरेवमोजसा सर्वं तद् वनमन्विष्यतोस्तद् वनं प्रभञ्जन्निव विपुलः शब्दः प्रजज्ञे। गगनमत्यर्थं मातरिश्वना संवेष्टितमिवासीत्। तस्य वनस्य शब्दो दिवमापूरयन्निवाभूत्। तस्य शब्दस्य प्रभवं जिज्ञासुः सलक्ष्मणो रामो गुल्मे सुमहाकायं विपुलोदरं राक्षसमपश्यत्। प्रमुखे स्थितं विवृद्धमशिरोग्रीवमुदरस्थमुखं निचितैस्तीक्ष्णै रोमभिरुच्छ्रितं महागिरिसदृशं नीलमेघनिभं रौद्रं मेघस्तनितनिस्वनं कबन्धमासेदतुः। तस्योरसि महापक्ष्मपिङ्गं विपुलं घोरमाशुदर्शि एकं नयनमासीत्।

महादंष्ट्रोपपन्नमहामुखो लेलिहानः स महाघोरानृक्षसिंहमृगद्विपान् भक्षयति स्म। स योजनायतौ घोरौ भुजौ चालयन् विविधानृक्षपक्षिमृगानाकर्षन् विकर्षन् समीपमागतयो रामलक्ष्मणयोः पन्थानमावृत्य तस्थौ। तौ तं क्रोशदूराद् ददृशतुः। महाबाहुः स कबन्धो विपुलौ भुजावत्यर्थं प्रसार्य सहितावेव राघवौ बलात् पीडयन् जग्राह। खड्गिनौ दृढधन्वानौ तिग्मतेजस्कौ महाभुजौ तौ भ्रातरौ कृष्यमाणौ विवशतामनुबभूवतुः। तदा दानवोत्तमः कबन्धस्तावुवाच। महाखड्गधनुर्धरौ वृषभस्कन्धौ युवां कौ? घोरमिमं देशं प्राप्तौ मम भक्षावुपस्थितौ। वदतं किमर्थमिह युवामागतौ। सबाणचापखड्गौ तीक्ष्णशृङ्गौ वृषभाविव स्थितौ युवां ममास्यमनुप्राप्तौ। युवयोः पुनर्जीवितं दुर्लभम्। दुरात्मनः कबन्धस्य वचनं श्रुत्वा परिशुष्यता मुखेन रामो लक्ष्मणमब्रवीत्। आवयोः कृच्छ्रात् कृच्छ्रतरं प्राप्तम्। सीता न प्राप्ता सम्प्रति जीवितान्ताय दारुणं कष्टं प्राप्तम्। सर्वभूतेषु कालस्य सुमहद् वीर्यं प्रभवति। त्वां च मां च व्यसनैर्मोहितौ पश्य। कालस्य सर्वभूतेष्वपि भारो नास्ति। शूरा बलवन्तो रणरङ्गे कृतास्त्राश्च कालवशीभूय वालुकासेतव इव सीदन्ति। इति ब्रुवाणो राम उदग्रपौरुषं लक्ष्मणमवेक्ष्य स्थिरां मतिं चकार।

## ६६

बाहुपाशबद्धौ रामलक्ष्मणौ कबन्ध उवाच। भोः क्षत्रियर्षभौ! क्षुधार्तं मां दृष्ट्वा किं नु तिष्ठतः? युवां गतप्राणौ दैवेन ममाहारार्थं संदिष्टौ। तदा दुःखितो लक्ष्मणो विक्रमितुं निश्चित्य भ्रातरं प्राप्तकालं हितं वाक्यमुवाच। राक्षसाधमस्तूर्णं त्वां मां चादत्ते। तस्मादस्य गुरू बाहू असिभ्यां छिनदावहै। ततो

देशकालज्ञौ तौ राघवौ खड्गाभ्यां तस्य बाहू अंसदेशतश्छित्त्वा सुसंजहृषतुः। दक्षिणं बाहुं रामश्चिच्छेद सव्यं लक्ष्मणश्च। छिन्नबाहुः कबन्धो महास्वनो जलदवत् खं गां दिशश्च नादयन् पपात। निकृत्तभुजः शोणितौघपरिप्लुतः स दानवो दीनो भूत्वा युवां काविति तौ वीरौ पप्रच्छ। तदा लक्ष्मणो रामं कबन्धस्य शशंस। अयं रामो नामेक्ष्वाकुवंशजः। मामस्यावरजं भ्रातरं लक्ष्मणं विद्धि। विजने वने वसतोऽस्य देवप्रभावस्य पत्नी रक्षसापहृता। तामन्विष्यन्ताविहागतौ स्वः। त्वं को वा? कबन्धसदृश उरसि दीप्तेनास्येन भग्नजङ्घो वने किमर्थं वा विचेष्टसे? लक्ष्मणेनैवमुक्तः कबन्धस्तदिन्द्रवचनं स्मरन् परमप्रीतः समादधौ। नरव्याघ्रौ! स्वागतं वाम्। दिष्ट्याहं वां पश्यामि। दिष्ट्या युवाभ्यां मे बाहू निकृत्तौ। अविनयान्मे विरूपं कथं प्राप्तं शंसामि। शृणुतम्।

## ६७

महापराक्रम राम! पूर्वं मम सोमवत् शक्रवत् सूर्यवच्च त्रिलोकविश्रुतमद्भुतं रूपमासीत्। सोऽहं लोकवित्रासनं महदिदं रूपं कृत्वा ततस्ततो वनगतानृषीन् त्रासयन्नासम्। एकदा विविधं वन्यं संचिन्वन् स्थूलशिरा नाम महर्षिरनेन रूपेण मया धर्षितः कोपितश्च। मां प्रेक्ष्य स महर्षिस्ते नृशंसं विगर्हितमेतद् रूपमेवास्तु इति घोरं शापमभ्यदधात्। ममापचारकृतस्य शापस्यान्तो भवेदिति मया याचितो महर्षिरिदमभाषत। यदा भुजौ छित्त्वा रामस्त्वां विजने वने दहेत् तदा स्वं विपुलं शुभं रूपं प्राप्स्यसि। श्रीमानहं दनोः पुत्रः। इन्द्रकोपाद् रणरङ्गे मयेदं रूपं प्राप्तम्। अहमुग्रेण तपसा पितामहमतोषयम्। स मे

दीर्घमायुः प्रादात्। ततो मे गर्वो जातः। मया दीर्घमायुः प्राप्तम्। शक्रो मे किं करिष्यति? इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम्। तस्य बाहुप्रमुक्तेन शतपर्वणा वज्रेण सक्थिनी शिरश्च शरीरे संप्रवेशितान्यभवन्। मया याच्यमानो देवेन्द्रो मां यमसादनं नानयत्। पितामहस्य तद् वचनं सत्यमस्त्विति मामब्रवीत्। वज्रेणाभिहतोऽहं भग्नसक्थिशिरोमुखः अनाहारः सुदीर्घं कालं जीवितुं कथमहं शक्तः स्याम्? इति मयोक्तः शक्रो मे योजनमायतौ बाहू प्रादात्। मम कुक्षौ तीक्ष्णदंष्ट्रमास्यं चाकल्पयत्। सोऽहं दीर्घाभ्यां भुजाभ्यां समन्ततो वनेचरान् सिंहद्विपमृगव्याघ्रान् समाकृष्य भक्षयामि। यदा सलक्ष्मणो रामः समरे बाहू छेत्स्यति तदा स्वर्गं गमिष्यसीति इन्द्रो मामब्रवीत्। त्वं रामोऽसि। भद्रं ते। महर्षिवचनादहं रामादन्येन हन्तुमशक्यः। अहमग्निना संस्कृतो युवाभ्यां मतिसाचिव्यं करिष्यामि। मित्रं चोपदेक्ष्यामि। तेन दनुवंशजेनैवमुक्तो रामो लक्ष्मणे शृण्वति जगाद। आवयोर्निष्क्रान्तयोर्मम भार्या सीता रावणेन हृता। तस्य रक्षसो नाममात्रं जानामि। तस्य निवासं वा प्रभावं वा न विद्वः। शोकार्तावनाथौ ततस्ततो विपरिधावावः।उपकारं च ते कुर्वतोरावयोः कारुण्यं क्रियताम्। शुष्काणि काष्ठान्यादाय महति श्वभ्रे त्वां धक्ष्यावः। स त्वं तत्त्वतो यदि जानासि सीताया वार्तां येन वा यत्र वा हृता समाचक्ष्व। अत्यर्थं कल्याणं कुरु। रामेणैवमुक्तो दनुवंश्यः प्रोवाच। दिव्यं ज्ञानं मे नास्ति। मैथिलीं न जानामि। दग्धः स्वं रूपमास्थितस्तां यो जानाति तं वक्ष्ये। एतज्ज्ञातुमदग्धस्य मे शक्तिर्नास्ति। शापदोषेण मम विज्ञानं भ्रष्टं स्वकृतेनैव लोकविगर्हितं रूपं प्राप्तम्। किन्तु

सविता श्रान्तवाहनो यावदस्तं न याति तावन्मामवटे क्षिप्त्वा यथाविधि दह। त्वयावटे यथाशास्त्रं दग्धो यस्तं राक्षसं जानाति तं वक्ष्ये। तेन सख्यं कर्तव्यम्। स ते साहाय्यं कल्पयिष्यति। त्रिषु लोकेषु तस्याविदितं नास्ति। कारणान्तरे स सर्वान् लोकान् परिसृतः।

६८

एवं कबन्धेनोक्तौ रामलक्ष्मणौ तं गिरिमूले पातयित्वा पावकसाच्चक्रतुः। लक्ष्मणो महोल्काभिः समन्ततश्चितामादीपयामास। सा चिता सर्वतः प्रजज्वाल। मेदोमयं कबन्धस्य शरीरं मन्दमदह्यत। स शुभे वाससी दिव्यां मालां बिभ्रत् चितां विधूयाशु विधूमोऽग्निरिवोत्थितः। ततो भास्वरः स कबन्धो विमलाम्बरः संहृष्टः सर्वप्रत्यङ्गभूषण आशु चिताया उत्पपात। अन्तरिक्षगतो भास्वरे विमाने तिष्ठन् महातेजाः प्रभया दश दिशो विराजयन् राममब्रवीत्। राम! सीतां यथावाप्स्यसि तत् तत्त्वेन शृणु। लोके कार्यसाधकाः सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः षडुपायाः सन्ति। दुर्दशाग्रस्तस्य मनुष्यस्य दुर्दशाग्रस्तेनैव सह समाश्रयो युक्तः। तव लक्ष्मणस्य च दुर्दशाफलमनुभवितव्यमस्ति। अत एव त्वया दारप्रधर्षणं दुःखं प्राप्तम्। तस्मात् सदृशः सुहृत् त्वयावश्यं कार्यः। मित्रमसंपाद्य ते कार्यसिद्धिमहं चिन्तयन् न पश्यामि। राम! श्रूयताम्। शक्रसूनुना भ्रात्रा क्रुद्धेन वालिना निरस्तः सुग्रीवो नाम वानरोऽस्ति। बुद्धिमान् वीरः सुग्रीवः पम्पानदीप्रान्ते शोभिते ऋष्यमूके गिरिवरे चतुर्भिर्वानरैः सह निवसति। अद्येतः क्षिप्रं गत्वा अद्रोहायाग्निं साक्षिणं कृत्वा तं मित्रं कुरु। वानराधिपः स सुग्रीवस्ते नावमन्तव्यः। स कृतज्ञः कामरूपी सहायार्थी वीर्यवांश्च। युवां तस्य चिकीर्षितं कार्यं

र्तुं समर्थौ। कृतार्थो वा अकृतार्थो वा स ते कृत्यं करिष्यति। ऋक्षरजसः पुत्रो भास्करस्यौरसः पुत्रः स वालिना कृतावमानः ाङ्कितः पम्पामटति। सायुधस्त्वं वनचारिणमृष्यमूकालयं कपिं ग्रीवं सत्येन क्षिप्रं वयस्यं कुरु। स नरमांसाशिनां सर्वाणि थानानि कात्स्न्येन नैपुण्याद् विजानाति। यावत् सूर्यः प्रतपति ावत् तस्याविदितं लोके किञ्चिन्नास्ति। स वानरैः सार्धं नदीः लान् गिरिदुर्गाणि कन्दरांश्चान्विष्य ते पत्नीमधिगमिष्यति। द्वियोगेन शोचन्तीं सीतां विचेतुं महाकायान् वानरान् दिशः षयिष्यति। मेरुशृङ्गाग्रगां वा पातालतलाश्रितां वा तत्र प्रविश्य क्षांसि निहत्य तव प्रियां स पुनः प्रदास्यति।

## ६९

सीतामधिगन्तुमुपायं रामाय दर्शयित्वा कबन्धः पुना राममुवाच। श्चिमदिशमाश्रित्य मनोरमा नानाविधाः पुष्पिता द्रुमाः प्रकाशन्ते। ा शिवः पन्थाः। तान् वृक्षानारुह्य वा बलात् पातयित्वा वा मृतकल्पानि फलान्यादाय भक्षयन्तौ गमिष्यथः। शैलात् शैलं ाद् वनं च गच्छन्तौ पम्पां नाम पुष्करिणीं गमिष्यथः। र्करारहितां विभ्रंशहीनां समतीर्थामशैवलां संजातवालुकां मलोत्पलशालिनीं पम्पां प्रति गच्छतम्। पम्पासरसि निवसन्तो ाः प्लवाः क्रौञ्चाः कुरराश्च वल्गुस्वना विकूजन्ति। ते क्षणो वधं न जानन्ति। तस्मात् ते नरान् दृष्ट्वा नोद्विजन्ते। पिण्डोपमान् स्थूलांस्तान् द्विजान् भक्षयिष्यथः। तत्र ायामिषुभिर्हतान् वरान् निस्त्वक्पक्षानयस्तप्तान् अकृशान् कण्टकान् मत्स्यान् रोहितान् वक्रतुण्डान् नलमीनांश्च मणो भक्त्या समायुक्तस्तव संप्रदास्यति। भृशं मत्स्यान्

खादतस्ते पुष्पसंचये स्थितं पद्मगन्धि शिवं सुखशीतमनामयं सततनिर्मलं रौप्यस्फटिकसन्निभं वारि लक्ष्मणः पुष्करपर्णेन पातुं दास्यति। स्थूलान् गिरिगुहाशयनान् वनचारिणो जलं पातुमागतान् वृषभानिव नर्दतो रूपान्वितान् वराहान् पम्पायां त्वं द्रक्ष्यसि। सायाह्ने विचरन् पुष्पधारिणीर्वृक्षशाखाः+ पम्पायाः शीतोदकं च दृष्ट्वा शोकं विहास्यसि। तत्र सुमनोभिर्व्याप्तान् तिलकान् नक्तमालकान् फुल्लान्युत्पलानि पङ्कजानि च द्रक्ष्यसि। तत्र कश्चिन्मनुष्यस्तानि पुष्पाण्यवचित्य न धरति। तत्रैकाग्रचित्ता मतङ्गशिष्या ऋषय आसन्। गुरोर्वन्यमाहरतां भाराभितप्तानां तेषां शरीरात् तूर्णं महीं पतिताः स्वेदबिन्दवो मुनीनां तपसा पुष्पाण्यभवन्। स्वेदबिन्दुजातानि तानि पुष्पाणि न विनश्यन्ति। तेषां परिचारिणी चिरजीविनी शबरी नाम श्रमणी अद्यापि दृश्यते। नित्यं धर्मे स्थिता सा सर्वभूतनमस्कृतं देवोपमं त्वां दृष्ट्वा स्वर्गलोकं गमिष्यति। ततः पम्पायास्तत् पश्चिमं तीरमाश्रित्यातुलं गुह्यमाश्रमस्थानं द्रक्ष्यसि। ऋषेर्मतङ्गस्य नियमात् तमाश्रमं तत् काननं च गजा आक्रमितुं न शक्नुवन्ति। नन्दनसंकाशे देवारण्योपमे नानाविहगसंकीर्णे तस्मिन् वने निर्वृतो रंस्यसे। पम्पायाः पुरस्तात् पुष्पितद्रुमः सुदुःखारोहणः शिशुगजाभिरक्षितो ब्रह्मणा पूर्वकाले विनिर्मितः श्रेष्ठ ऋष्यमूकपर्वतोऽस्ति। तस्य शैलस्य मूर्धनि शयानः पुरुषः स्वप्ने यद् वित्तं लभते प्रबुद्धस्तदधिगच्छति। विषमाचारः पापकर्मा तं शैलं नाधिरोहति। सुप्तं तं राक्षसास्तत्रैव प्रहरन्ति। तत्रापि पम्पायां क्रीडतां मतङ्गारण्यवासिनां शिशुगजानां महानाक्रन्दः

---

+ Cr विटपी। ग्राह्यः — विटपान्।

श्रूयते। मेघवर्णास्तरस्विनः परमद्विपाः संहत्य रुधिरधाराभिः सिक्ताः पृथक्कीर्णाः प्रचरन्ति। वनसंचारिणस्ते गजा विमलं शीतमारोग्यकरमुदकं पीत्वा निवृत्ता वनानि विगाहन्ते। तस्य शैलस्य शिलापिधाना महती गुहा शोभते। तस्याः प्रवेशनं कष्टम्। तस्या गुहायाः प्राग्द्वारे शीतोदकः फलमूलान्वितो रम्यो नानावृक्षसमावृतो महान् ह्रदोऽस्ति। सुग्रीवश्चतुर्भिर्वानरैः सह तस्यां गुहायां वसति। कदाचित् तस्य पर्वतस्य शिखरे तिष्ठति। इति वीर्यवान् स्रग्वी कबन्धस्तौ रामलक्ष्मणावनुशास्य खे भास्करसदृशप्रभो व्यरोचत। प्रस्थितौ रामलक्ष्मणौ समीपे खस्थं महाभागं कबन्धं त्वं साधयेति ऊचतुः। तदा प्रस्थितः स कबन्धश्च तयोराज्ञां प्राप्य कार्यसिद्ध्यर्थं गम्यतामिति तावब्रवीत्। इत्थं कबन्धस्तद् रूपं प्राप्य खस्थो राममृष्यमूकं गत्वा सुग्रीवस्नेहं कुर्विति तदोवाच।

## ७०

ततो रामलक्ष्मणावरण्ये प्रतीचीं दिशं गृहीत्वा कबन्धेन दर्शितं तं पम्पाया मार्गमातस्थतुः। तौ शैलेषु व्याप्तान् क्षौद्रकल्पफलान् द्रुमान् वीक्षमाणौ सुग्रीवं द्रष्टुं जग्मतुः। रात्रौ शैलोपरिभागे वासं कृत्वा पम्पायाः पश्चिमं तीरमुपतस्थतुः। तत्र च शबर्या रम्यमाश्रममपश्यताम्। बहुभिर्द्रुमैरावृतं सुरम्यं तमाश्रममभिवीक्षमाणौ तमाश्रममासाद्य शबरीमभ्युपेयतुः। सिद्धा सा शबरी तौ दृष्ट्वा कृताञ्जलिः समुत्थाय रामस्य लक्ष्मणस्य च पादौ जग्राह। ततः संशितव्रतां तां श्रमणीं राम उवाच। तपोधने! कच्चित् ते विघ्ना निर्जिताः? कच्चित् ते तपो वर्धते? कच्चित् ते क्रोध आहारश्च नियतौ? कच्चित् ते नियमाः प्राप्ताः? कच्चित् ते

मनसः सुखम्? कच्चित् ते गुरुशुश्रूषा सफला? एवं पृष्टा वृद्धा तापसी शबरी रामं शशंस। मया परिचरिता महर्षयस्त्वयि चित्रकूटं प्राप्ते अतुलप्रभैर्विमानैरितो दिवमारूढाः। धर्मज्ञैर्महर्षिभिरहमेवमुक्ता। रामस्ते सुपुण्यमिममाश्रममागमिष्यति। सौमित्रिसहितः स ते अतिथिः प्रतिग्रहीतव्यः। तं रामं दृष्ट्वा त्वं वरानक्षयान् लोकान् गमिष्यसि। मया तवार्थे पम्पातीरसंभवं विविधं वन्यं पदार्थजातं संचितम्। इत्युक्तो रामो नित्यं ज्ञानमार्गे स्थितां तां शबरीं प्राह। महात्मनो दनुपुत्रस्य सकाशात् श्रुतं ते प्रभावं यदि मन्यसे संद्रष्टुमिच्छामि। एतद् रामवचनं श्रुत्वा शबरी तौ महत् तद् वनं दर्शयामास। सान्द्रमेघप्रख्यं मृगपक्षिसमाकुलं मतङ्गवनमित्येव विश्रुतमिदं वनं पश्य। पुण्यात्मानस्ते मे गुरव इह मन्त्रपूजितं गङ्गादितीर्थमाहूतवन्तः। इयमेव प्रत्यक्स्थली सा वेदिर्यत्र ते महर्षयो वेपमानैः करैः पुष्पोपहारमकुर्वन्। तेषां तपःप्रभावेणातुलप्रभा वेद्यः श्रियाद्यापि सर्वा दिशो द्योतयन्ति पश्य। उपवासश्रमालसानां गन्तुमशक्नुवतां तेषां मुनीनां चिन्तनादेव अभ्यागतान् सहितान् सप्त सागरान् पश्य। इह कृताभिषेकैस्तैः पादपेषु न्यस्ता बल्कला अद्यापि न विशुष्यन्ति। त्वया कृत्स्नमिदं वनं दृष्टं श्रोतव्यं च श्रुतम्। तत् त्वयाभ्यनुज्ञाता एतच्छरीरं त्यक्तुमिच्छामि। अस्मिन्नाश्रमे मया शुश्रूषितानां मुनीनां समीपमहं गन्तुमिच्छामि। धर्मिष्ठं तद् वचः श्रुत्वा प्रहृष्टो रामः अनुजानामि गच्छेति तामवदत्। रामेणानुज्ञाता हुताशने आत्मानं हुत्वा ज्वलत्पावकसंकाशा सा स्वर्गं जगाम। स्वतपसा शबरी तन्महर्षिणां पुण्यं स्थानं जगाम।

## ७१

शबर्यां स्वेन कर्मणा दिवं यातायां रामो महात्मनां मुनीनां प्रभावं चिन्तयित्वा हितकारिणमेकाग्रं लक्ष्मणमब्रवीत्। सौम्य!

नियमितमनसां मुनीनां बह्वाश्चर्यो विश्वस्तमृगशार्दूलो नानाविहगसेवितोऽयमाश्रमो दृष्टः। एषु तीर्थेषु स्नात्वा सप्तसमुद्रस्नानपुण्यमवाप्तम्। पितरश्च विधिवत् तर्पिताः। अशुभं प्रणष्टं कल्याणं च समुपस्थितम्। मनो हृष्टम्। शुभे प्राप्स्यमाने प्रहृष्टं हृदयं तज्जानाति। तदागच्छ। धर्मात्मा अंशुमतः सुतः सुग्रीवो नित्यं वालिभयाच्चतुर्भिर्वानरैः सह यस्मिन् वसति तस्य ऋष्यमूकस्य समीपस्थां प्रियदर्शनां पम्पां गमिष्यावः। वानरर्षभं सुग्रीवं द्रष्टुमभित्वरे। सीतायाः परिमार्गणं तदधीनं हि। लक्ष्मणश्च तत्रैव गच्छावो ममापि मनस्त्वरते इत्युवाच। ततो राम आश्रमान्निर्गम्य लक्ष्मणेन सह पम्पामाजगाम। मार्गे तौ पुष्पाढ्यान् विविधान् द्रुमान् ददृशतुः। नानावृक्षान् विविधानि सरांसि च पश्यन् रामः सीतावियोगसंतप्तो बभूव। ततस्तौ श्रेष्ठं पङ्कजावृतं पम्पासरः पुनः प्रापतुः। तत्तीरे बहवो वृक्षा बहून्युपवनानि च शुशुभिरे। तस्य सरसो जलं स्फटिकोपमं शीतं मत्स्यकच्छपपूर्णं चासीत्। तीरे वालुका श्लक्ष्णा ददृशे। युक्ताभिर्लताभिः सा सरसी सखीभिरिवानुवेष्टिता। सौगन्धिकैः पद्मैश्च ताम्रा कुमुदमण्डलैः शुक्ला कुवलयसमुदायैर्नीला च सा सरसी बहुवर्णा कुथेवाभासत। बहुपुष्पशोभितां बर्हिणोद्घुष्टां च तां दृष्ट्वा रामः सीतावियोगतापेन विललाप। बहुवर्णपुष्पभरितैर्वृक्षैः सा सरसी भूषिता प्रमदेवाभासत। पूर्वोक्तो धातुमण्डितः पुण्यः पुष्पितपादप ऋष्यमूक इति ख्यातः पर्वतस्तस्यास्तीरे ददृशे। हरेः ऋक्षरजसः पुत्रो महावीर्यः सुग्रीवस्तं पर्वतमध्यास्ते। त्वं सुग्रीवमभिगच्छ। इति रामो लक्ष्मणमुवाच। एवं सुदूरं वर्त्म क्रमेण गत्वा काननं प्रविलोकयन् बहुपक्षियुतां पम्पां सलक्ष्मणो रामो ददर्श।

समाप्तमरण्यकाण्डम्



# किष्किन्धाकाण्डम्

## १

सौमित्रिसहितो रामः पद्मोत्पलझषाकुलां पम्पासरसीं गत्वा आकुलेन्द्रियो विललाप। तस्याः सौन्दर्यं वीक्ष्यानन्दनिर्भरमना भूत्वा रामः सीतावियोगापन्नो लक्ष्मणमाह। सौमित्रे! पम्पायाः शुभदर्शनं काननं पश्य। अत्र द्रुमाः सशिखरशैलतुल्या भासन्ते। भरतस्य दुःखेन सीताया हरणेन च शोकाभिसन्तप्तं मां मनोव्यथाः पीडयन्ति। द्रुमाणां विविधैः पुष्पैः परिस्तोमैरिवार्पितमेतन्नीलपीतं शाद्वलमधिकं विभाति। सुखानिलोऽयं कालः प्रचुरमन्मथः। जातपुष्पफलद्रुमो गन्धवान् चैत्रो मासः प्रवर्तते। वर्षतां तोयमुचामिव पुष्पवर्षाण्युत्सृजतां पुष्पशालिनां वनानां रूपाणि पश्य। रम्येषु पर्वतप्रान्तेषु विविधाः काननद्रुमा वायुवेगप्रचलिताः पुष्पैर्गामवकिरन्ति। मधुगन्धिषु वनेषु अनुकूजद्भिः षट्पदैः सह चन्दनशीतलः सुखसंस्पर्शो मारुतो वाति। रम्येषु गिरिप्रस्थेषु पुष्पवद्भिर्मनोरमैर्महाद्रुमैः संसक्तशिखराः शैला विराजन्ति। समन्ततः पुष्पितानेतान् कर्णिकारान् पश्य। स्वर्णाभरणसंछन्नाः पीताम्बरा नरा इव ते भासन्ते। नानाविहगनादितोऽयं वसन्तः सीतया विप्रहीणस्य मम शोकसन्दीपनः प्रवर्तते। शोकसमाक्रान्तं मां मन्मथः संतापयति। हृष्टः प्रवदंश्च कोकिलः समाह्वयतीव। रम्ये वननिर्झरे हृष्टः प्रणदन्नेष दात्यूहको मन्मथाविष्टं मां शोचयति। स्त्रियो विहगाः पुम्भिर्मिश्रिताः सजातीयैः पक्षिभिरभिनन्दिता भ्रमरगीतैः प्रमुदिता मधुरं कूजन्ति।

सीताचिन्ताशोकबलात्कृतं मामद्य+ क्रूरश्चैत्रवनानिलः संतापयति। गिरिसानुषु शिखिनीपरिवृताः शिखिनो मन्मथबाधितस्य मम बाधां विवर्धयन्ति। गिरिसानुनि++ मन्मथार्तैषा शिखिनी नृत्यन्तं भर्तारमासाद्य नृत्यति। नूनं मयूरस्य प्रिया वने रक्षसा न हृता। तस्मात् कान्तया सह रम्ये कानने नृत्यति।3+ चैत्रमासे सीतां विनायं वासो मम सुदुःसहः। वसन्तर्तौ पुष्पभारसमृद्धानां वनानां सर्वाणि पुष्पाणि मे निष्फलानि भवन्ति। मुदिताः शकुना मम कामोन्मादकरा अन्योन्यमाह्वयन्त इव संघशो यथेच्छं कलं नदन्ति। नूनं परवशा श्यामा मृदुभाषा प्रिया सीता चाहमिव शोचति। पुष्पवहः सुखस्पर्शो हिमावह एष वायुस्तां कान्तां विचिन्तयतो मे पावकप्रतिमोऽस्ति। यदा सीता अपहृता तदासौ वायसः खमुत्पत्य परुषं रुवन् तस्या अपहरणमसूचयत्। स एवाद्य मम सीतया पुनः समागमं सूचयन् पादपगतः प्रहृष्टमभिकूजति। आकाशे डयमान एष पक्षी तदा सीताहरणं सूचयन् हरणकारणमभूत्। स एव मां सीतासमीपमुपनेष्यति। पुष्पिताग्रेषु वृक्षेषु कामं विवर्धयन्तो द्विजाः कूजन्ति। पश्य। आसु रम्यासु वनपङ्क्तिषु पम्पाया जले तरुणसूर्यवन्नलिनानि प्रकाशन्ते। प्रसन्नसलिला पद्मनीलोत्पलसौगन्धिकपूर्णा हंसकारण्डवाकीर्णा एषा पम्पा प्रकाशते। पम्पानद्याः परितः सुन्दराः प्रदेशाः सन्ति। नद्यां सर्वदा चक्रवाका निवसन्ति। जलपानार्थमागतैर्गजयूथैर्नदी

---

+ Cr मां हि सा। ग्राह्यः – मां ह्यद्य। मृगशावाक्षी चिन्ताशोकबलात्कृतम् इति पाठः मृगशावाक्षीचिन्ताशोकबलात्कृतम् इति पठितव्यः।

++ गिरिसानुषु। ग्राह्यः गिरिसानुनि। 3+ ग्राह्या – तस्मान्नृत्यति रम्येषु वनेषु सह कान्तया।

शोभते। सीतानेत्रसदृशानीति दृष्टिः पद्मकोशपलाशानि द्रष्टुमीहते। पद्मकेसरसंसृष्टो वृक्षान्तरविनिःसृतो मनोहरः सीताया निःश्वास इव वायुर्वाति। पम्पाया दक्षिणे भागे गिरिसानुनि परमशोभनां पुष्पितां कर्णिकारस्य यष्टिं पश्य। धातुभिर्विभूषितोऽयं शैलराजो वायुवेगविघट्टितं विचित्रं रेणुमधिकं सृजति। गिरिप्रस्थाः सर्वतः संप्रपुष्पितैर्निष्पत्रै रम्यैः किंशुकैः सर्वतः प्रदीप्ता इव दृश्यन्ते। पम्पातीररुहाः संसक्ता मधुगन्धिनो मालतीमल्लिकापद्मकरवीराः पुष्पिताः सन्ति। केतक्यः सिन्धुवारा वासन्त्यो गन्धपूर्णा माधव्यः कुन्दगुल्माश्च सर्वशः सुपुष्पिताः। चम्पकतिलककुरवकादिविविधा वृक्षाः पुष्पिताः। नगसानुषु तैरेव पुष्पैर्विकीर्णैः प्रस्तराः पीतरक्ताभाः कृताः। शिशिरर्तोरन्ते चैत्रमासे वृक्षाणां पुष्पसंभवं पश्य। तरवः परस्परसंघर्षादिव पुष्पिताः। शीतजलां पुष्करयुतां चक्रवाककारण्डवनिषेवितां प्लवैः क्रौञ्चैः संपूर्णां वराहमृगसेवितां पम्पां पश्य। विकूजद्भिर्विहङ्गमैः पम्पा नितान्तं शोभते। श्यामां प्रियां स्मारयित्वा विविधा मुदिताः पक्षिणो मे कामं दीपयन्तीव। चित्रेषु सानुषु मृगीभिः सहितान् मृगान् पश्य मां च वैदेह्या विरहीकृतम्। शोकोपहतचेतनो राम एवं विलपन् शिवां पम्पामवैक्षत। एवं निरीक्षमाण उद्विग्नचेता लक्ष्मणेन सह प्रतस्थे। तौ भ्रातरौ दृष्ट्वा हरयस्त्रस्ता बभूवुः।

## २

वरायुधधरौ वीरौ तौ भ्रातरौ दृष्ट्वा सुग्रीवः शङ्कितो बभूव। स वानरपुङ्गव उद्विग्नहृदयः सर्वा दिशः समवलोकयन् कस्मिन्नपि देशे न व्यतिष्ठत। महाबलौ तौ वीक्षमाणः क्वापि स्थातुं नैव मनश्चक्रे। परमभीतस्य कपेश्चित्तं दुर्बलमभवत्। स चिन्तयित्वा

त्रबलस्य गुरुलाघवं विमृश्य सर्वैर्वानरैः सह परमोद्विग्नो भूत्वा चिवेभ्यः शशंस। चीरवसनौ छद्मना दुर्गमिदं वनं प्रचरन्तावेतौ वं वालिप्रहिताविहागतौ। ततः सुग्रीवसचिवाः परमधन्विनौ मलक्ष्मणौ दृष्ट्वा तस्माद् गिरितटादन्यद् गिरिशिखरं जग्मुः। तस्ते वानरनायकाः क्षिप्रमभिगम्य सुग्रीवं परिवार्योपतस्थुः। एवं रेर्गिरिं प्लवमाना गिरिशिखराणि प्रकम्पयन्तः पुष्पितान् वृक्षान् ञ्जयन्तश्चैकमार्गं प्रापुः। ते वानरश्रेष्ठास्तं महागिरिं सर्वत ाप्लवमाना मृगमार्जालशार्दूलान् त्रासयन्तो ययुः। ततः सर्वे ग्रीवसचिवाः पर्वतेन्द्रे समाहिताः सुग्रीवेण संगम्य ाञ्जलयस्तस्थुः। ततो वाक्यकोविदो हनुमान् संत्रस्तं ालिकिल्बिषशङ्कितं सुग्रीवमुवाच। हरिपुङ्गव! यस्मात् त्वमुद्विग्न- ता विद्रुतश्चासि तं क्रूरदर्शनं क्रूरं वालिनमिह न पश्यामि। ौम्य! पापकर्मणो यस्मात् पूर्वजात् ते भयं स दुष्टात्मा वाली ह नास्ति। तव भयकारणमहं न पश्यामि। प्लवङ्गम! ापलचित्ततयात्मानं मतौ न स्थापयसि। तव शाखामृगत्वं यक्तम्। विज्ञानयुतया बुद्ध्या चेष्टाभिः परेषामभिप्रायान् विज्ञाय र्वं समाचर। बुद्धिरहितो राजा प्रजापालनं कर्तुं न शक्नोति। नूमतः शुभं वाक्यं श्रुत्वा सुग्रीवः क्षेमकरतरं वचनं तमुवाच। हाबाहू शरचापासिधारिणौ सुरसुतोपमावेतौ दृष्ट्वा कस्य भयं स्यात्? पुरुषोत्तमाविमौ वालिप्रहितावेवाहं शङ्के। राजानो हुमित्रा भवन्ति। अत्र विश्वासो न क्षमः। मनुष्येण छद्मचारिणोऽरयो विज्ञेयाः। अविश्वस्तास्ते शत्रवो विश्वस्तांश्छिद्रेषु हरन्ति। वाली मेधावी कृत्येषु। बहुदर्शना राजानः परहन्तारो ावन्ति। तान् प्रति प्राकृतैर्जनैर्जागरूकैर्भवितव्यम्। त्वं

सामान्यमानववद् गत्वा इङ्गितैर्विकारै+ रूपेण भाषणैश्च तौ जानीहि। तयोर्भावं लक्षय। यदि प्रसन्नौ श्लाघाभिरनुकूलचेष्टाभिश्च तयोर्विश्वासमुत्पादय। ममैवाभिमुखो भूत्वा तयोररण्यप्रवेशप्रयोजनं पृच्छ। एवमेव तयोः साधुता वा दुष्टता वा ज्ञेया। एवं सुग्रीवेणादिष्टो हनुमान् रामलक्ष्मणयोः समीपं गन्तुं निश्चिकाय। तथेति सुग्रीवमुक्त्वा महाबलो हनुमान् रामलक्ष्मणयोः समीपं जगाम।

३

महात्मनः सुग्रीवस्य वचो विज्ञाय हनुमान् ऋष्यमूकादवप्लुत्य रामलक्ष्मणयोः समीपं जगाम। तयोः सह मृदुवचनैः संभाषितुमुपचक्राम। स्वकं रूपं परित्यज्य भिक्षुरूपेण गत्वा तावाबभाषे यथावत् प्रशशंस च। राजर्षिदेवप्रतिमौ संशितव्रतौ तापसौ स्निग्धरूपौ भवन्तौ कथमिमं देशं प्राप्तौ? इह मृगगणानन्यान् वनचारिणश्च त्रासयन्तौ पम्पातीरमहावृक्षान् समन्ततो वीक्षमाणौ शुभजलामिमां नदीं शोभयन्तौ तरस्विनौ धैर्यवन्तौ सुवर्णाभौ चीरवाससौ युवां कौ? सिंहबलविक्रमौ सिंहविप्रेक्षितौ वीरौ विपुलैर्भुजैः शक्रचापनिभे चापे प्रगृह्यागतौ युवां कौ? शोभायुतौ रूपसंपन्नौ वृषभश्रेष्ठगमनौ हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ युवां कौ? असौ पर्वतेन्द्रो युवयोः प्रभया अवभासितः। राज्यार्हौ अमरप्रख्यौ युवामिमं देशं कथमागतौ? युवां जटामण्डलधारिणौ अन्योन्यसदृशौ देवलोकादागतौ वीराविव वर्तमानौ यदृच्छया वसुन्धरां प्राप्तौ चन्द्रसूर्याविव प्रकाशमानौ स्थः। आयताः सुवृत्ताः परिघोपमाः++ सर्वभूषणैरलङ्कर्तुमर्हा युवयोर्बाहवः किमर्थं न विभूषिताः? युवामुभाविमां ससागरवनां विन्ध्यमेरुविभूषितां कृत्स्नां पृथिवीं रक्षितुं योग्यावहं मन्ये। चित्रे

---

+ Cr शङ्कितानां प्रकारैश्च। ग्राह्यः – इङ्गितैश्च विकारैश्च।

++ Cr परिघोत्तमाः। ग्राह्यः – परिघोपमाः।

श्लक्ष्णे चित्रानुलेपने इमे धनुषी चेन्द्रस्य हेमविभूषितवज्रवत् प्रकाशेते। शुभदर्शनास्तूणाश्च जीवितान्तकरैर्घोरैर्ज्वलद्भिः पन्नगैरिव दृश्यमानैर्बाणैः संपूर्णाः। महाप्रमाणौ विपुलौ तप्तहाटकभूषितावेतौ खड्गौ निर्मुक्तभुजगाविव प्रकाशेते। एवं परिभाषमाणं मां कस्मान्नाभिभाषेथे? सुग्रीवो नाम वीरो धर्मात्मा कश्चिद् वानरपुङ्गवो भ्रात्रा विनिकृतो दुःखितो जगति भ्रमति। महात्मना वानरराजेन तेन सुग्रीवेण प्रेषितः प्राप्तोऽहं हनुमान्नाम वानरः। धर्मात्मा स सुग्रीवो युवाभ्यां सख्यमिच्छति। अहं सुग्रीवस्य प्रीतिं कर्तुं संन्यासिरूपेण प्रतिच्छन्नोऽस्मि। अहं तस्य सचिव ऋष्यमूकादिह प्राप्तोऽस्मि। अहं कामगः कामरूपी वायुपुत्रो वानरः। एतद् वित्तम्। वाक्यकुशलो हनुमानेवमुक्त्वा विरराम। रामस्तस्यैतद् वचनं श्रुत्वा प्रहृष्टवदनः पार्श्वतः स्थितं भ्रातरं लक्ष्मणमब्रवीत्। कपीन्द्रस्य महात्मनः सुग्रीवस्य सचिवोऽयम्। तमेव काङ्क्षमाणस्य मम समीपमिहागतः। लक्ष्मण! वाक्यज्ञं स्नेहयुक्तमरिंदमं सुग्रीवसचिवमिमं कपिं मधुरैर्वाक्यैरभिभाषस्व। एवमुक्तः सौमित्रिः सुग्रीवसचिवं हनुमन्तमभ्यभाषत। हे विद्वन्! महात्मनः सुग्रीवस्य गुणा नौ विदिताः। आवां प्लवगेश्वरं तमेव मृग्यावः। सज्जनश्रेष्ठ! सुग्रीववचनं यथा त्वमनुवदसि तथा करिष्यावः। तद्वाक्यं निशम्य भृशं संतुष्टो हनुमान् जयः संभाव्य इति निश्चित्य ताभ्यां सुग्रीवस्य सख्यं कर्तुमियेष+।

---

+ Cr Appendix I 3 तः ग्राह्याः श्लोकाः। एवमुक्तस्तु सौमित्रिः सुग्रीवसचिवं कपिम्। अभ्यभाषत वाक्यज्ञो वाक्यज्ञं पवनात्मजम्।। विदिता नौ गुणा विद्वन् सुग्रीवस्य महात्मनः। तमेव चावां मार्गावः सुग्रीवं प्लवगेश्वरम्॥ यथा ब्रवीषि हनुमन् सुग्रीववचनादिह।तत्तथा हि करिष्यावो वचनात् तव सत्तम। तत्तस्य वाक्यं निपुणं निशम्य प्रहृष्टरूपः पवनात्मजः कपिः। मनः समाधाय जयोपपत्तौ सख्यं तदा कर्तुमियेष ताभ्याम्।।

४

ततो हनुमान् लक्ष्मणस्य प्रियाभिप्रायसंयुतं वचनं श्रुत्वा तौ सुग्रीवेण कार्यार्थिनाविति निश्चित्य प्रहृष्टः सुग्रीवस्य कार्यसाफल्यं मनस्यचिन्तयत्। इमौ प्रयोजनादिहागतौ तत् प्रयोजनं च सुग्रीवो विधातुं शक्नोति यदि ततः सुग्रीवस्य राज्यप्राप्तिः संभाव्या। एवं विचिन्त्य संतुष्य हनुमान् राममुवाच। पम्पावनमण्डितं दुर्गं नानाव्यालमृगसंकीर्णं घोरं काननं किमर्थं त्वं सानुज आगतः? तदा रामचोदितो लक्ष्मणो रामस्य परिचयमेवमाचचक्षे। द्युतिमान् धर्मप्रियो दशरथो नाम राजासीत्। तस्यायं पूर्वजो पुत्रो रामो नाम। सर्वभूतानां शरण्यः पितुराज्ञापारगो दशरथपुत्राणां गुणवत्तमः। अयं राज्याद् भ्रष्टो वस्तुमिहागतोऽस्ति। वशी महातेजा अयं दिनक्षये दिवाकरः प्रभयेव भार्यया सीतयानुगतः। अहं कृतज्ञस्य बहुज्ञस्यास्य गुणैर्दास्यमुपागतः अवरो भ्राता लक्ष्मणो नामास्मि। महार्हस्य सर्वभूतहितात्मन ऐश्वर्येण विहीनस्य वनवासाश्रितस्य मद्भ्रातुर्भार्या रहिते कामरूपिणा राक्षसेनापहृता। येन सा हृता स न ज्ञायते। श्रीनामकस्य पुत्रो दनुर्नामासीद्* यः शापाद् राक्षसतां गतः। तेन वानराधिपः सुग्रीवः समर्थ आख्यातः। स महावीर्यस्तव भार्याया अपहारिणं ज्ञास्यतीति दनुरुक्त्वा भ्राजमानः स्वर्गमगात्। तव प्रश्नानुसारेणैतत् सर्वं यथातथमाख्यातम्। अहं रामश्च सुग्रीवं शरणं गतौ। एष रामो बहुधनानि वितीर्य सुमहद् यशः प्राप्तवान्। पुरा लोकनाथो भूत्वा सुग्रीवं नाथमिच्छति। शोकपीडिते शरणं गते रामे सुग्रीवो यूथपैः सह प्रसादं कर्तुमर्हति। करुणं साश्रुपातनमेवं ब्रुवाणं

लक्ष्मणं वाक्यविशारदो हनुमानिदं प्रत्युवाच। बुद्धिसंपन्ना जितक्रोधा जितेन्द्रियास्त्वादृशा वानरेन्द्रेण द्रष्टव्याः। दिष्ट्या भवन्तावेव तस्य दर्शनमपेक्षेते। भ्रात्रा वालिना कृतवैरो हृतदारो भृशं पराभूतस्त्रस्तश्च स वने निवसति। भास्करात्मजः सुग्रीवः अस्माभिः सह सीतायाः परिमार्गणे युवयोः साहाय्यं करिष्यति। इति हनुमान् मधुरया गिरा श्लक्ष्णमुक्त्वा सुग्रीवमभिगच्छाम इति राममुवाच। तदा तं प्रतिपूज्य लक्ष्मण उवाच। राम! मारुतात्मजोऽयं कपिर्हृष्टो यथा कथयति सोऽपि कार्यार्थी संप्राप्तः। त्वं कृतकृत्योऽसि। स प्रसन्नमुखवर्णो हृष्टः स्पष्टं भाषते। वायुपुत्रो हनुमानसत्यं न वदेत्। ततो महाप्राज्ञो हनुमान् तावादाय सुग्रीवान्तिकं जगाम। कपिप्रवीरो हनुमान् कृतकृत्यवत् प्रहृष्टः सन् रामलक्ष्मणाभ्यां सह ऋष्यमूकं प्रययौ।

## ५

हनुमान् ऋष्यमूकपर्वतात् तन्निकटस्थं मलयं नाम गिरिं मत्वा सुग्रीवाय रामलक्ष्मणावाचचक्षे। दृढविक्रमो महाप्राज्ञो रामो भ्रात्रा सह संप्राप्तः। इक्ष्वाकुकुलजातो दशरथात्मजो रामः स्वधर्मपालने विख्यातः पितुर्निर्देशकारकः। अरण्ये निवसतो रामस्य भार्या राक्षसेनापहृता। स रामस्त्वां शरणमागतः। येन राजसूया-श्वमेधैर्वह्निरभितर्पितस्तथा शतसहस्रशो गावो दक्षिणा उत्सृष्टा येन तपसा सत्यवाक्येन वसुधा पालिता तस्य दशरथस्य पुत्रोऽयं रामो हृतभार्यस्त्वां शरणं प्राप्तः। ताविमौ भ्रातरौ रामलक्ष्मणौ भवता सह सख्यकामौ। मान्यावेतावुभौ प्रगृह्यार्चय। हनुमतो वाक्यं श्रुत्वा हृष्टमानसः सुग्रीवो विगतज्वरो राघवाद् भयं प्रजहौ। स सुग्रीवो मानुषं रूपं कृत्वा दर्शनीयतमो भूत्वा राघवं

प्रोवाच। भवान् धर्मे सुष्ठु शिक्षितः। सर्वेषु वत्सलः। विक्रान्तः। हनुमता तत्त्वतो भवद्गुणा आख्याताः। प्रभो! वानरेण मया सह यत् त्वं स्नेहमिच्छसि एष ममैव सत्कार उत्तमो लाभश्च। यदि सख्यं रोचते एष बाहुः प्रसारितः। पाणिना पाणिर्गृह्यताम्। ध्रुवा मर्यादा बध्यताम्। सुग्रीवस्य सुवचनं श्रुत्वा हृष्टो रामः पाणिना पाणिं जग्राह। सौहार्देन गाढं सुग्रीवं पर्यष्वजत। ततो हनुमान् भिक्षुरूपं संत्यज्य स्वेन रूपेण युतः काष्ठयोरग्निं जनयामास। दीप्यमानं सत्कृतं वह्निं पुष्पैरभ्यर्च्य सुसमाहितः सुप्रीतस्तयोर्मध्ये निदधे। ततः स्नेहमुपागतौ तौ रामसुग्रीवौ दीप्यमानमग्निं प्रदक्षिणं चक्रतुः। सुप्रीतमनसौ तावुभावन्योन्यमभिवीक्षमाणौ तृप्तिं नाभिजग्मतुः। पश्चात् सर्वविषयज्ञातारं रामं सुग्रीवः प्राह।

६

राम! मम सचिवो हनुमान् तवारण्यागमनकारणमाख्यातवान्। भ्रात्रा लक्ष्मणेन सह वने वसतस्तव भार्या मैथिली रुदती अन्तरं प्राप्य जटायुषं हत्वा रक्षसापहृता। अदीर्घकाले भार्यावियोगदुःखं त्वं विमोक्ष्यसि। नष्टां वेदश्रुतिमिव तामहमानेष्यामि। रसातले वर्तमानामथवा नभस्तले वर्तमानां वा तव भार्यामहमानीय दास्यामि। तथ्यं वच्मि। त्वमवेहि। शोकं त्यज। तव कान्तामानेष्यामि। क्रूरकर्मणा रक्षसा ह्रियमाणा राम रामेति लक्ष्मणेति च विस्वरं विलपन्ती पन्नगेन्द्रवधूरिव रावणस्याङ्के स्फुरन्ती मयैका स्त्री दृष्टा। अनुमानात् सा मैथिलीति जानामि। संशयो नास्ति। शैलतटे चतुर्भिर्मन्त्रिभिः सह स्थितं मां दृष्ट्वा तया उत्तरीयं शुभान्याभरणानि च त्यक्तानि। तान्यस्माभिर्गृहीतानि निहितानि च। अहं तान्यानेष्यामि। प्रत्यभिज्ञातुमर्हसि। तदा रामः

व्रे शीघ्रं तान्यानयेति सुग्रीवमुवाच। सुग्रीवो गुहां
वेश्योत्तरीयमाभरणानि च गृहीत्वागम्य रामाय दर्शयामास।
मस्तानि गृहीत्वा नीहारेण चन्द्रमा इव बाष्पसंरुद्धो बभूव।
र्मुत्सृज्य हा प्रिये इति रुदन् क्षितौ निपपात। उत्तमं
लङ्कारं बहुशो हृदि निधाय रोषितो बिलस्थः सर्प इव भृशं
शश्वास। सतताश्रुवेगो रामः पार्श्वतः स्थितं सौमित्रिं प्रेक्ष्य
नं परिदेवयितुं समुपचक्रमे। लक्ष्मण! ह्रियमाणया वैदेह्या
रीराद् विमुच्य भूमौ संत्यक्तमिदमुतरीयं भूषणानि च पश्य।
यमाणया सीतयेदं भूषणं शाद्वलिन्यां भूमावुत्सृष्टम्। ध्रुवम्।
त एव तथारूपमक्षतं दृश्यते।* सुग्रीव! मम प्राणसमा पिया
रूपेण रक्षसा कं देशं ह्रियमाणा त्वया लक्षिता? मम
खदः स महान् राक्षसः क्व वा वसति? तेन कारणेन
र्वान् राक्षसानहं नाशयिष्यामि। ब्रूहि। मैथिलीं हृत्वा मां
यित्वा ध्रुवं तेन स्वस्य मृत्युद्वारमपावृतम्। मम भार्याहर्तारं
ं कथय। तं यमसन्निधिं क्षिप्रं नेष्यामि।

---

अत्र केषुचित् प्रकाशनेषु – एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत्
ं जानामि केयूरे नाहं जानामि कुण्डले नूपुरे त्वभिजानामि नित्यं
ाभिवन्दनात्॥ इति पङ्क्तयो दृश्यन्ते।सीताया आभरणानि लक्ष्मणाय
र्श्य रामः केवलं स्वदुःखं प्रकटितवान् न तु तानि प्रत्यभिज्ञातुं पृष्टवान्।
ताया बहून्याभरणान्यासन् यानि लक्ष्मणो रामो वा नाभिज्ञातुं शक्नुयात्।
 च किं लक्ष्मणो भ्रातृजायाया मुखं कदापि न दृष्टवान्? सीतां हस्तग्राहं
मणो नावमारोपयद् गङ्गातरणे(अयोध्या ४६, ६३)। इदं च लक्ष्मणवाक्यं
शीलनीयम्। ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते सीतेव
तपश्यामा लक्ष्यते न तु शोभते। (अरण्य १५.१४)।। अतस्ताः पङ्क्तयः
प्ता इति स्फुटमवसीयते। एवं साधारणप्रकाशनेषु बहवः श्लोका भागाश्च
प्ताः सन्ति।

७

आर्तेन रामेणैवमुक्तः सुग्रीवो दुःखितः प्राञ्जलिरुवाच। दौष्कुलेयस्य पापरक्षसः कुलं निलयं सामर्थ्यं विक्रमं वा सर्वथा न जाने। परन्तु सत्यं प्रतिजानामि। मैथिलीं यथा प्राप्स्यसि तथा यत्नं करिष्यामि। सगणं रावणं हत्वा आत्मपौरुषं पूर्णतः प्रदर्श्य शीघ्रमेव तथाहं करिष्यामि यथा त्वं प्रीतो भविष्यसि। वैक्लब्यमालम्ब्यालम्। आत्मगतं धैर्यं स्मर। त्वद्विधानामीदृशी लघुबुद्धिर्न युज्यते। मयापि भार्याविरहजं महद् दुःखं प्राप्तम्। अहमेवं न शोचामि। न च धैर्यं परित्यजामि। अहं प्राकृतो वानरोऽपि सन् पत्नीं स्मरन् निरन्तरं न दुःखितो भवामि। महात्मा शास्त्रशिक्षितो धृतिमान् भवान् किं पुनः? समागतं बाष्पं त्वं धैर्यान्निग्रहीतुमर्हसि। मनोबलयुतानां मर्यादां धृतिं चोत्स्रष्टुं नार्हसि। आपदि वा धननाशे वा जीवितान्तगे भये वा धृतिमान् स्वया बुद्ध्या विमृशन् नावसीदति। यो नरो मूढो भूत्वा नित्यं वैक्लव्यमनुवर्तते सः अवशो भाराक्रान्ता नौरिव जले शोके मज्जति। बद्धाञ्जलिः प्रणयात् त्वां विज्ञापयामि। पौरुषमाश्रयस्व। शोकस्यान्तरं दातुं नार्हसि। शोकभाजां सुखं न विद्यते तेजश्च हीयते। अतस्त्वं शोचितुं नार्हसि। वयस्यधर्मेण हितं ब्रवीमि न तु तवोपदिशामि। मम स्नेहं मानयन् त्वं शोचितुं नार्हसि। एवं सुग्रीवेण मधुरं सान्त्वितो रामः अश्रुपरिक्लिन्नं मुखं वस्त्रान्तेन प्रामार्जयत्। सुग्रीववचनात् प्रकृतिस्थो रामस्तं संपरिष्वज्येदमब्रवीत्। सुग्रीव! स्निग्धेन हितेन च वयस्येन यत् कर्तव्यं युक्तमनुरूपं च तत् त्वया कृतम्। त्वयानुनीतोऽहं प्रकृतिस्थोऽस्मि। ईदृशो बन्धुर्दुर्लभः। अस्मिन् काले विशेषतो

दुर्लभः। किन्तु त्वया सीतायास्तथा दुष्टबुद्धे रौद्रस्य रावणस्य च परिमार्गणे यत्नः कार्यः। मया यदनुष्ठेयं तद् विस्रब्धेन त्वयोच्यताम्। वर्षासु सुक्षेत्रे सस्यमिव सर्वं तव संपद्यते। वानरश्रेष्ठ! मया स्वपराक्रमप्रत्ययाद्यदिदं समीरितं त्वया स यथार्थो निश्चीयताम्। अहमनृतं कदापि नावोचं न च वक्ष्ये। एतत् ते प्रतिजानामि। सत्येनैव शपे। तदा राघवस्य वचनं विशेषतः प्रतिज्ञां श्रुत्वा सचिवैः सह सुग्रीवः प्रजहर्ष। वानरश्रेष्ठः सुग्रीवो रामस्य वचो निशम्य तदा स्वकार्यं कृतमिति मनसि निश्चिकाय।

## ८

रामवाक्येन परितुष्टः सुग्रीव इदमुवाच। सर्वसद्गुणोपेतस्त्वं मम सखासि। अतोऽहं सर्वथा देवतानामनुग्राह्योऽस्मि। संशयो नास्ति। प्रभो! त्वया सहायेन सुरराज्यमपि प्राप्तुं शक्यम्। किं पुनः स्वराज्यम्? यस्य रघुवंशजः सुहृदग्निसाक्षिको लब्धः सोऽहं बन्धूनां सुहृदां च सभाज्योऽस्मि। अहमपि तेऽनुरूपो वयस्यः। इदं शनैर्ज्ञास्यसि। स्वयमात्मगुणान् कथयितुं न समर्थोऽस्मि। मनस्विनां धैर्यमिव त्वद्विधानां बुद्धिमतां महात्मनां प्रीतिर्भूयिष्ठं निश्चला भवति। सज्जनानां रजतं सुवर्णमुत्तमानि वस्त्राण्याभरणानि चाविभक्तानीति साधवो वदन्ति। आढ्यो वा दरिद्रो वा दुःखितो वा सुखितो वा निर्दोषो वा सदोषो वा वयस्यः परमा गतिः। राम! सन्तो लोके स्नेहं परमं गणयन्ति। अत एव वयस्यार्थे धनत्यागसुखत्यागदेहत्यागाः प्रवर्तन्ते। तदा रामो वासवतुल्यशोभायुतस्य लक्ष्मणस्याग्रतः प्रियदर्शनं सुग्रीवं भवान् सत्यमाहेत्युवाच। रामलक्ष्मणौ स्थितौ दृष्ट्वा सुग्रीवः

सर्वतो वीक्ष्याविदूरे सालमपश्यत्। तस्यैकां पर्णबहुलां शाखां भङ्क्त्वास्तीर्य रामेण सह निषसाद। हनुमानपि सालशाखां समुत्पाटच्य लक्ष्मणमुपवेशयामास। ततः सुग्रीवः श्लक्ष्णया गिरा राममुवाच। अहं भ्रात्रा विनिकृतः। भयार्दितो हृतभार्यः सुदुःखितोऽहं गिरिमृष्यमूकमावसामि। वालिना कृतवैरोऽस्मिन् वने भयमग्नोऽस्मि। सर्वलोकाभयंकर! वालिभयार्तस्यानाथस्य ममापि त्वं प्रसादं कर्तुमर्हसि। एवमुक्तो धर्मवत्सलो रामः प्रहसन्निव तं प्रत्युवाच। उपकारः स्नेहस्य प्रतिफलं भवति। अपकारः शत्रुलक्षणम्। अतस्तव भार्यापहारिणं वालिनमद्यैव हनिष्यामि। इमे मे कार्तिकेयवनोद्भूता महावेगा महेन्द्राशनिसंनिभाः शराः। तव भ्रातृसंज्ञं कृतकिल्बिषं शत्रुं वालिनं विकीर्णं पर्वतमिव शरैर्विनिहतमचिरात् पश्य। वानराधिपतिः सुग्रीवो रामस्य वचः श्रुत्वा अतुलं प्रहर्षं लेभे। साधु साध्वित्यब्रवीत्। राम! अहं शोकाभिभूतः। शोकार्तानां त्वं रक्षकः। वयस्य इति तवाग्रे परिदेवयामि। त्वं पाणौ पाणिं गृहीत्वा अग्निसाक्षिकं+ कृतो मम वयस्यः प्राणसमश्चासि। अतः सत्येन शपामि वदामि च। वयस्य इति विस्रब्धं भणामि यदन्तर्गतं दुःखं मे मनो नित्यशो दहति। एतावदुक्त्वा सुग्रीवः अश्रुपूर्णलोचनो बाष्परुद्धया वाचा उच्चैर्भाषितुं न शशाक। पुनः स नदीवेगमिव सहसागतं बाष्पवेगं धैर्येण धारयामास। नयने प्रमृज्य विनिःश्वस्य राममब्रवीत्। पुराहं बलीयसा वालिना स्वाद् राज्यादवरोपितः परुषैर्वचनैर्निर्धूतश्चासम्। प्राणेभ्योऽपि गरीयसी मे भार्या तेन हृता मदीयाः सुहृदो बन्धनेषु संयताश्च। दुष्टात्मा स वाली मद्विनाशे नित्यं यत्नवान् वर्तते।

---

+ Cr अग्निसाक्षिकः। ग्राह्यः अग्निसाक्षिकम्।

बहुशस्तत्प्रयुक्ता वानरा मया निहताः। अनयैव शङ्कया त्वामिह दृष्ट्वा भीतो नोपासर्पम्। भयकारणे सति सर्वे बिभ्यति हि। केवलमिमे हनुमत्प्रमुखा मे सहायाः सन्ति। अतोऽहं कृच्छ्रगतोऽप्यद्य प्राणान् धरामि। स्निग्धा एते कपयो मां समन्ततो रक्षन्ति। सह गच्छन्ति सह तिष्ठन्ति च। राम! एष मे संक्षेपेण वृत्तान्तः। किं विस्तरेण? मम ज्येष्ठो भ्राता विश्रुतपौरुषो वाली मे रिपुः। तद्विनाशानन्तरमेव मम दुःखं प्रणश्येत्। मम सुखं जीवितं च तद्विनाशमनुबध्नाति। शोकार्तेन मयैष मे शोकान्तोपायो निवेदितः। दुःखितो वादुःखितो वा सखा सख्युर्गतिर्भवति। एतत् श्रुत्वा रामः सुग्रीवमपृच्छत्। युवयोः किंनिमित्तं वैरमभूत्? यथार्थं श्रोतुमिच्छामि। तव वैरस्य कारणं श्रुत्वा बलाबलं संप्रधार्य अनन्तरकार्यं सौलभ्येन विधास्यामि। त्वामवमानितं श्रुत्वा मम हृदयोत्कम्पी बलवानमर्षः प्रावृषि जलवेग इव वर्धते। क्षिप्रं हृष्टो विस्रब्धो भूत्वा कथय। श्रुत्वैव धनुरारोप्य बाणं प्रयुज्य ते रिपुं हन्मि। एवं रामेणोक्तश्चतुर्भिर्वानरैः सह सुग्रीवो निस्तुलं प्रहर्षं लेभे। ततः स वैरकारणं रामायाख्यातुमुपचक्रमे।

९

शत्रुनिषूदनो वाली नाम मम ज्येष्ठो भ्राता नित्यं पितुर्बहुमतः पुरा मम चापि। अस्मत्पितर्युपरतेऽयं ज्येष्ठ इति परमसंमतं तं मन्त्रिणः कपीनामीश्वरं चक्रुः। महत् पितामहपितृक्रमागतं राज्यं प्रशासतस्तस्य सर्वेषु कालेषु प्रेष्यवदहं प्रणतः स्थित आसम्। दुन्दुभेर्ज्येष्ठः पुत्रो मायावी* नाम तेजस्वी आसीत्।

---

* उत्तरकाण्डकथनमनुसृत्य (१२.१२) मयदानवस्य मायावी दुन्दुभिश्च पुत्राविति व्याख्यातारोऽलिखन्।

तेन पुरा वालिनः स्त्रीकृतं महद् वैरमभवद् यत् सर्वविदितम्। रात्रौ जने सुप्ते स मायावी किष्किन्धाद्वारमागतः सुसंरब्धोऽनर्दद् वालिनं रणायाह्वयत्। तदा प्रसुप्तो मम भ्राता वाली नर्दतस्तस्य भैरवं स्वनं न ममर्ष। जवाद् बहिर्निष्पपात। स्त्रीभिः प्रणतेन मया च निवार्यमाणो वाली तमसुरोत्तमं हन्तुं क्रोधान्निःसृतः। सर्वान्नो विधूय स निर्जगाम। ततोऽहमपि सौहार्दाद् वालिना सह निःसृतोऽभवम्। सोऽसुरो मे भ्रातरं दूरादवस्थितं मां च दृष्ट्वा भृशं संत्रस्तस्तदा प्रदुद्राव। संत्रस्ते तस्मिन् द्रवति आवां तदनु द्रुतं गतौ। तदोद्गतेन चन्द्रेण मार्गः प्रकाशितः। सोऽसुरस्तृणैरावृतं दुर्गं महद् भूविवरं वेगात् प्रविवेश। आवां तदासाद्य स्थितौ। रिपुं बिलं प्रविष्टं दृष्ट्वा वाली रोषवशं गतः क्षुभितेन्द्रियो मामुवाच। सुग्रीव! अहं बिलं प्रविश्य युद्ध्वा रिपुं हनिष्यामि। तावत् त्वं बिलद्वारि समाहितस्तिष्ठ। अहमपि सह गच्छामीति मया प्रार्थितो वाली असंमत्य मां पद्भ्यां शापयित्वा एको बिलं प्रविवेश। बिलं प्रविष्टस्य तस्य संवत्सरादधिकः कालो व्यतीतः। सर्वं तत्कालमहं बिलद्वारि स्थित आसम्। तदाहं तस्मिन् बिले वाली नष्टमार्गोऽभवदित्यचिन्तयम्। संभ्रान्तस्य मम मनो भ्रातृमरणशङ्कि जातम्। ततो दीर्घकालानन्तरं तस्माद् बिलात् सफेनं रुधिरं दृष्ट्वाहं सुदुःखित आसम्। नर्दतामसुराणां ध्वनिर्मया श्रुतः। युद्धासक्तस्य क्रोशतो वा भ्रातुः स्वनो न मया श्रुतः+। सखे! अहं तैश्चिह्नैर्भ्रातरं हतं निश्चित्य पर्वतप्रमाणया शिलया बिलद्वारं पिधाय शोकार्तो भ्रातुर्जलाञ्जलिं

---

+ Cr निरस्तस्य च संग्रामे क्रोशतो निःस्वनो गुरोः। ग्राह्यः – न रतस्य च संग्रामे क्रोशतोऽपि स्वनो गुरोः।

कृत्वा किष्किन्धामागच्छम्। मया निगूहितोऽपि यथार्थो मन्त्रिभिर्यत्नतो ज्ञातः। ततः समेतैस्तैरहमभिषेचितः। तत्पश्चान्मयि न्यायतो राज्यं पालयति तमसुरोत्तमं शत्रुं हत्वा वाली प्रतिन्यवर्तत। मामभिषिक्तं दृष्ट्वा कोपसंरक्तलोचनो वाली मदीयान् मन्त्रिणो बद्ध्वा मां परुषैर्वचनैरदूषयत्। अहं तदा तस्य दुष्टस्य निग्रहे समर्थ आसम्। मम बुद्धिस्तु भ्रातृगौरवयन्त्रिता तस्मिन् कर्मणि न प्रावर्तत। तं मानयन् यथावदभ्यवादयम्। स हृष्टो न बभूव मामाशिषो नोवाच।

## १०

ततोऽहं क्रोधसमाविष्टं संरब्धमुपागतं भ्रातरं प्रेम्णा प्रासादयम्। दिष्टया त्वया रिपुर्निहतः। कुशली प्राप्तोऽसि। अनाथस्य मे त्वमेको नाथः। उदितं पूर्णचन्द्रमिव शोभितं बहुशलाकमिदं छत्रं चामरं चाहं ते धरामि। स्वीकुरु। मानार्हो राजा त्वमेव। अहं सदा पूर्ववत् तव दासोऽस्मि। मयि न्यासभूतमिदं राज्यं ते निर्यातयामि। हे शत्रुनिबर्हण! सौम्य! मयि रोषं मा कृथाः। अञ्जलिं बद्ध्वा शिरसा त्वां याचे। मन्त्रिभिः पुरवासिभिश्च समागम्याहं रक्षकरहितं मा भूदिति राज्ये बलान्नियुक्तोऽस्मि। एवं स्निग्धं ब्रुवाणं मां वाली निर्भर्त्स्य धिक् त्वामित्युक्त्वा बह्वदूषयत्। प्रकृतीः संमतान् मन्त्रिणश्च समानीय सुहृदां मध्ये मां परमगर्हितं वाक्यमाह। विदितं वो यथा युद्धाकाङ्क्षी महासुरो मायावी रात्रौ मां समाह्वयत। तस्य तद् गर्जितं श्रुत्वाहं नृपालयान्निःसृतः। सुदारुणोऽयं भ्राता मां तूर्णमनुयातः। ससहायं मां दृष्ट्वा विभीतः स राक्षसः प्राद्रवत्। आवाभ्यामनुद्रुतो वेगेन महाबिलं प्रविवेश। तं राक्षसं सुमहद् बिलं प्रविष्टं विदित्वा

मयार्य क्रूराभिप्रायो भ्रातोक्तः। असुरमहत्वा पुरीं न निवर्तिष्ये। यावदेनं निहनिष्यामि तावद् बिलद्वारि प्रतीक्षस्वेति। अयं स्थित इति मत्वा दुर्गमं बिलमहं प्राविशम्। तत्र तमसुरमवीक्ष्य संवत्सरममृग्यम्। मार्गणे अनिर्विण्णोऽहं तमसुरं दृष्ट्वा गृहीत्वा सह बन्धुभिरहनम्। भूतले पतित्वा क्रोशतस्तस्य मुखात् प्रवृत्तेन रुधिरप्रवाहेण बिलं पूर्णं दुर्गमं चाभवत्। प्रख्यातं पराक्रमवन्तं शत्रुं दुन्दुभेः सुतं मायाविनं सूदयित्वा निष्क्रमितुमिच्छन् पिहितत्वाद् बिलस्य द्वारं नापश्यम्। हे सुग्रीव हे सुग्रीवेति पुनः पुनर्विक्रोशन् प्रतिवचनमप्राप्य भृशं दुःखितोऽभवम्। मया बहुशः पादप्रहारैस्तद् विदारितम्। तेन मार्गेण निष्क्रम्य पुनरुपागतोऽस्मि*। आत्मनो राज्यं मृग्यता नृशंसेनानेन भ्रातृसौहृदं विस्मृत्याहं तत्र संरुद्ध आसम्। सभायां मामेवमुक्त्वा निर्विचारो वाली धृतवस्त्रमात्रं मां निर्वासयामास। तेन निष्कासितो हृतदारश्चाहं तद्भयात् सवनार्णवां सर्वां महीमक्रामम्। भार्याहरणदुःखितोऽहं गिरिवरमृष्यमूकं प्रविष्टोऽस्मि यतः कारणान्तरेण वालीह न प्रवेष्टुं शक्नोति। राम! सर्वो वैरवृत्तान्तस्ते आख्यातः। अनागसा मया कष्टं प्राप्तम्। सर्वलोकभयापह! वालिनं निगृह्य तद्भयार्तस्य मे प्रसादं कर्तुमर्हसि। एवमुक्तो रामः प्रहसन् सुग्रीवमुवाच। मम कोपपूर्णा अमोघाः सूर्यसंकाशा निशिताः शरा दुर्वृत्ते तस्मिन् वालिनि पतिष्यन्ति। तव भार्यापहारिणं वालिनं यावन्न पश्येयं तावत् स पापात्मा दुर्वृत्तो जीवेत्। आत्मानुमानात् त्वां शोकसागरे मग्नं पश्यामि। तस्मात् त्वामहं तारयिष्यामि। अभिलषितं सर्वं त्वं प्राप्स्यसि।

* यथा पुनरुपागतः। यथाशब्दो वाक्यालङ्कारे इति महेश्वरतीर्थः।

# ११

हर्षपौरुषवर्धनं रामस्य वचनं श्रुत्वा सुग्रीवस्तं सम्मान्य प्रशशंस। प्रज्वलितैस्तीक्ष्णैः शरैः कुपितस्त्वं युगान्ते भास्कर इव निस्संशयं लोकान् दहेः। वालिनः कीदृशं पौरुषं कीदृशं बलं कीदृशी धृतिरिति ममैकमनाः श्रुत्वा पश्चात् करणीयं विधत्स्व। श्रमरहितो वाली सूर्योदयात् पूर्वं पश्चिमात् समुद्रात् पूर्वं दक्षिणात् समुद्रादुत्तरं च क्रामति। वीर्यवान् स वाली शैलानामग्राण्यारुह्य महान्ति शिखराणि तरसोर्ध्वमुत्क्षिप्य प्रतिगृह्णाति। आत्मनो बलं प्रकटयता वालिना वनेषु सारवन्तो विविधा बहवो द्रुमास्तरसा भग्नाः। पुरावृत्तं शृणु। कैलासशिखरतुल्यो वीर्यवान् महिषरूपो दुन्दुभिर्नाम राक्षसो हस्तिसहस्रस्य बलं धारयामास। वीर्योत्सेकेन वरदानेन च मोहितो दुष्टात्मा महाकायः स दुन्दुभिः समुद्रं जगाम। ऊर्मिमन्तं रत्नसंचययुतं समुद्रमवधीर्य समुद्रदेवं मम युद्धं प्रयच्छेत्युवाच। तदा धर्मात्मा महाबलः समुद्रः समुत्थाय कालचोदितमसुरमुवाच। युद्धविशारद! तव युद्धं दातुं समर्थो नास्मि। यस्ते युद्धं प्रयच्छति तमभिधास्यामि। श्रूयताम्। परं तपस्विशरणं शङ्करश्वशुरो हिमवानिति नाम्ना विश्रुतो गुहाप्रस्रवणोपेतः शैलराजोऽस्ति। आहवे तवातुलां प्रीतिं कर्तुं स समर्थः। असुरोत्तमो दुन्दुभिस्तं भीतं विज्ञाय चापात् च्युतः शर इव हिमवत्पर्वतारण्यं गत्वा तस्य गिरेः श्वेता गजेन्द्रविपुलाः शिला बहुधा भूमौ चिक्षेप विननाद च। ततः श्वेताम्बुदाकारः सौम्यः प्रीतिकराकृतिर्हिमवान् स्वस्मिन्नेव शिखरे स्थितः प्राह। धर्मवत्सल! दुन्दुभे! त्वं मां क्लेशितुं नार्हसि। तपस्विशरणमहं

रणकर्मस्वकुशलः। तच्छ्रुत्वा क्रोधसंरक्तलोचनो दुन्दुभिरुवाच। त्वं युद्धे यद्यसमर्थः अथवा मद्भयान्निरुद्यमोऽसि तर्हि युयुत्सतो मे यो युद्धं प्रदद्यात् तमाचक्ष्व। श्रुत्वा कुपितो हिमवान् रणप्रदातुर्नाम प्रथमं निर्दिशन् दुन्दुभिमुवाच। शक्रतुल्यपराक्रमो वाली नाम वानरः अतुलप्रभां किष्किन्धामध्यास्ते। युद्धविशारदः स वासवो नमुचेरिव ते महद् द्वन्द्वयुद्धं दातुं समर्थः। यदि युद्धमिच्छसि शीघ्रं तमभिगच्छ। स शूरो नित्यं समरकर्मणि दुर्धर्षणः। हिमवतो वाक्यं श्रुत्वा क्रोधाविष्टो दुन्दुभिर्वालिनः किष्किन्धां पुरीं जगाम। महिषरूपं धृत्वा दुन्दुभिस्तीक्ष्णशृङ्गो भयावहः प्रावृषि नभस्तले तोयपूर्णो महामेघ इव किष्किन्धायाः द्वारमागम्य भूमिं कम्पयन् दुन्दुभिवन्ननर्द। स समीपस्थान् वृक्षान् भञ्जन् खुरैर्वसुधां दारयन् दर्पाद् विषाणेन तद्द्वारं द्विरदवदुल्लिखन् ननर्द। अन्तःपुरगतो वाली शब्दं श्रुत्वा अमर्षणस्ताराभिश्चन्द्रमा इव स्त्रीभिः सह निष्पपात। स दुन्दुभिं स्पष्टं मितमिदमाह। दुन्दुभे! नगरद्वारमिदं रुद्ध्वा किमर्थं विनर्दसि? त्वामहं जानामि। प्राणान् रक्ष। ततः कुपितो दुन्दुभिरुवाच। वीर! अलं स्त्रीसन्निधौ भाषित्वा। मम युद्धं प्रयच्छ। ततस्ते बलं ज्ञास्यामि। अथवाद्येमां निशां क्रोधं धारयिष्यामि। सूर्योदयस्तेऽवधिः। तावत्पर्यन्तः कालः स्वैरं त्वया कामभोगेषु गृह्यताम्। यो मत्तं प्रमत्तं सुप्तमायुधहीनं त्वद्विधं मदमोहितं वा हन्यात् स लोके भ्रूणहा कथ्यते। तदा वाली प्रहस्य ताराप्रभृतिकास्ताः सर्वाः स्त्रियो विसृज्य मन्दं तमसुरेश्वरं क्रोधादब्रवीत्। अयं मत्त इति मा मंस्थाः। संयुगे अभीतो यद्यसि अयं मदोऽस्मिन् संप्रहारे वीरपानं समर्थ्यताम्। एवं तमुक्त्वा

संक्रुद्धो वाली पित्रा महेन्द्रेण दत्तां काञ्चनीं मालां कण्ठे धृत्वा युद्धाय व्यवातिष्ठत। गिरिसंनिभं दुन्दुभिं विषाणयोर्गृहीत्वा व्यापाद्य महास्वनं ननर्द। युद्धे दुन्दुभिर्निष्पिष्टः। पात्यमानस्य तस्य श्रोत्राभ्यां रक्तं सुस्राव। स मृतः क्षितौ पपात। मृतं तं बाहुभ्यां तोलयित्वा वाली वेगादेकक्षेपेण योजनं चिक्षेप। वेगात् क्षिप्तस्य दुन्दुभेर्वक्त्राद् रक्तबिन्दवो मारुतोत्क्षिप्ता मतङ्गस्याश्रमं प्रति प्रपेतुः। पतितान् रक्तबिन्दून् दृष्ट्वा क्रुद्धो मुनिः क्षेप्तारं वालिनं प्रति महाशापमुत्ससर्ज। यो ममाश्रमं दूषितवान् तेनेह न प्रवेष्टव्यम्। प्रविष्टो मरिष्यतीति। वाली तं महर्षिं समासाद्य बह्वयाचत। परन्तु महर्षिस्तमनादृत्याश्रमं प्रति जगाम।+ तत्पश्चात् शापभयाद् विह्वलो वाली ऋष्यमूकं महागिरिं प्रवेष्टुं वा द्रष्टुं वा नेच्छति। तस्याप्रवेशं ज्ञात्वा विषादेन विवर्जितः सहामात्योऽहमिदं वनं विचरामि। वालिना वीर्योत्सेकान्निरस्तस्य दुन्दुभेर्गिरिकूटनिभो महानेषः अस्थिनिचयः संप्रकाशते। शाखायुता इमे सप्त विपुलाः सालाः। एष्वेकं बलात् प्रकम्प्य वाली निष्पत्रयितुं समर्थः। राम! अस्यासममेतद्वीर्यं मया प्रकाशितम्। समरे तं वालिनं हन्तुं कथं शक्ष्यसि? यदीमान् सालानेकेषुणा भवान् भिन्द्यात्तदा त्वां वालिनो वधे समर्थं जानीयाम्। तदा रामो दुन्दुभेः कायं पादाङ्गुष्ठेन लीलया दशयोजनं चिक्षेप। तदा सुग्रीवो रामं पुनराह। सखे! पुरा प्रत्यग्रं आर्द्रः समांसः कायो वालिना क्षिप्तः। सम्प्रति स लघुर्निर्मांसस्तृणभूतश्च। अस्मिन् विषये तव वा तस्य वा कस्य बलमधिकमिति ज्ञातुं न शक्यम्।

---

+ श्लोको ग्राह्यः। महर्षिस्तमनादृत्य प्रविवेशाश्रमं प्रति शापधारणभीतस्तु वाली विह्वलतां गतः।।

## १२

सुग्रीवस्य सुवचनं श्रुत्वा रामः प्रत्ययार्थं धनुर्जग्राह। स घोरं धनुर्गृहीत्वा ज्यास्वनैर्दिशः पूरयन् सालमुद्दिश्यैकं शरं चिक्षेप। बलवता रामेण विसृष्टः स्वर्णपरिष्कृतः स बाणो गिरिप्रस्थे सप्त सालान् भित्त्वा भूमिं विवेश। भूमिं प्रविष्टो महाजवः स शरः पातालं भित्त्वा निष्पत्य पुनस्तूर्णं स्वतूणीं प्रविवेश। सप्त सालान् निर्भिन्नान् दृष्ट्वा सुग्रीवो रामस्य शरवेगेन परमं विस्मयं प्राप। परमप्रीतः सः अञ्जलिं बद्ध्वा प्रलम्बीकृतभूषणो राघवाय साष्टाङ्गनमस्कारं कृत्वा सर्वास्त्रविदुषां श्रेष्ठं तमुवाच। प्रभो! सेन्द्रान् सर्वान् सुरानपि त्वं समरे हन्तुं समर्थः। किं पुनर्वालिनम्? त्वयैकेन बाणेन सप्त महासाला गिरिर्भूमिश्च दारिताः। तस्य ते रणाग्रतः कः स्थाता? महेन्द्रवरुणोपमं त्वां सुहृदं समासाद्याद्य मे शोको विगतः। परा प्रीतिर्जाता। राम! अञ्जलिं बद्ध्वा त्वां प्रार्थये। मम भ्रातृरूपिणं वैरिणं वालिनमद्यैव मम प्रियार्थं जहि। ततो रामः सुग्रीवं परिष्वज्य लक्ष्मणसंमतं वचनं प्रत्युवाच। सुग्रीव! क्षिप्रं किष्किन्धां गच्छाम। त्वं क्षिप्रमग्रतो गच्छ। तत्र गत्वा भ्रातृगन्धिनं वालिनं युद्धायाह्वयस्व। ततस्ते सर्वे किष्किन्धां त्वरितं गत्वा गहने वने वृक्षैरात्मानमावृत्य व्यतिष्ठन्त। गाढं वस्त्रेण कटिं बद्ध्वा सुग्रीवो वेगान्नादैरम्बरं भिन्दन्निव वालिनमाह्वयमानो घोरं व्यनदत्। महाबलो वाली भ्रातुस्तं निनदं श्रुत्वा क्रुद्धः क्षिप्रं तोयदाद् भास्कर इव+ निष्पपात। ततो गगने बुधाङ्गारकग्रहयोरिव

---

+ भास्करोऽस्ततटादिव इति Cr प्रतेरन्यप्रतीनां च पाठः। एतदुपमानं वालिनो निधनं सूचयतीति व्याख्यातारः। परन्तु अस्मिन् युद्धे वाली न म्रियते। उपमा नोपपद्यते यतः अस्ताद्रेः सूर्यः अधो गच्चति न बहिः। तोयदादिव भास्करः इति पाठः Cr अधःसूचिकातो ग्राह्यः।

वालिसुग्रीवयोः सुतुमुलं युद्धमभूत्। क्रोधपूर्णौ भ्रातरौ अशनिकल्पैस्तलैर्वज्रकल्पैर्मुष्टिभिश्चान्योन्यं जघ्नतुः। तदा धनुर्गृहीत्वा रामो देवावश्विनाविवान्योन्यसदृशौ वीरौ भ्रातरौ समुदीक्ष्योभयोर्व्यक्तिमनवगम्यान्तकरं शरं मोक्तुं नैच्छत्। एतस्मिन्नन्तरे वालिना भग्नः सुग्रीवो रामस्य रक्षणमपश्यन् ऋष्यमूकं प्रदुद्राव। क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्जरीकृतः सुग्रीवो वालिना योद्धुं क्रोधादभियुज्यमानो विद्रुत्य महावनं प्रविवेश। वनं प्रविष्टं सुग्रीवं दृष्ट्वा महाबलः स वाली त्वं मुक्तोऽसीत्युक्त्वा शापभयात् ततो निववृते। रामो लक्ष्मणहनुमद्भ्यां सह सुग्रीवमुपययौ। तं समीक्ष्य ह्रीमान् सुग्रीवो वसुधामवलोकयन् दीनमुवाच। वालिनं युद्धायाह्वयस्वेति मामुक्त्वा पराक्रमं प्रदर्श्य विश्वासमुत्पाद्य वैरिणा घातयित्वा त्वयेदानीं किं कृतम्? तस्यामेव वेलायां वालिनं न निहन्मीति यथार्थतस्त्वया वक्तव्यम्। ततोऽहमितो न व्रजेयम्। एवं दीनमुक्तवति सुग्रीवे रामः पुनरुवाच। सुग्रीव! येन मया बाणो न मुक्तस्तत् कारणं शृणु। क्रोधं च व्यपनय। अलङ्कारेण वेषेण प्रमाणेन गतेन च त्वं च वाली च परस्परं सदृशौ स्थः। स्वरेण तेजसा प्रेक्षणेन विक्रमेण वाक्यैश्च वां व्यक्तिं नोपलक्षये। ततो रूपसादृश्यान्मोहितोऽहं शत्रुनिबर्हणं शरं नामुञ्चम्। तस्मात् त्वं भूयो युध्यस्व। मां मा शङ्किष्ठाः।+ सद्य एव मयैकेन बाणेन निरस्तं महीतले वेष्टमानं वालिनं पश्य। वानरेश्वर! अभिज्ञानमात्मनः कुरुष्व येन द्वन्द्वयुद्धमुपागतं त्वामभिजानीयाम्। लक्ष्मण! इमां फुल्लां शुभलक्षणां गजपुष्पलतामुत्पाट्य

+ ग्राह्या– तस्माद् युध्यस्व भूयस्त्वं मा मा शङ्कीश्च वानर।

महात्मनोऽस्य सुग्रीवस्य कण्ठे बधान। तदा लक्ष्मणो गिरितटे जातां गजपुष्पलतामुत्पाट्य सुग्रीवस्य कण्ठे बबन्ध। शोभावान् स सुग्रीवः कण्ठसक्तया तया मालया बलाकानां मालया ससंध्यस्तोयद इव शुशुभे। वपुषा विभ्राजमानः स सुग्रीवो रामवाक्यसमाहितो रामेण सह पुनः किष्किन्धां जगाम।

१३

ततस्ते वालिपालितां किष्किन्धां जग्मुः। काञ्चनभूषितं महच्चापं सूर्यसंकाशान् रणसाधकान् सायकांश्च गृहीत्वा रामो जगाम। तस्याग्रतः सुग्रीवो लक्ष्मणश्च ययतुः। पृष्ठतो वानरसेनामहानायका हनुमान् नलो नीलस्तारश्च ययुः। ते पुष्पभारावलम्बिनो वृक्षान् प्रसन्नाम्बुवहाः सरितः कन्दराणि शैलान् निर्झराणि शिखराणि च पश्यन्तो ययुः। वैदूर्यविमलैः पर्णैः पद्मैश्च शोभितान् जलपूर्णान् बहुभिः पक्षिभिः प्रतिनादितान् तटाकांश्च व्यलोकयन्। मृदुतृणाङ्कुराहारान् निर्भयान् वनचारिणो हरिणान् सर्वतो ददृशुः। तटाकभञ्जनान् शुक्लदन्तविभूषितान् घोरानेकचरान् गजांश्च ददृशुः। किञ्च ते वनचरान् खेचरांश्च विहंगमान् ददृशुः। तत्र द्रुमषण्डवनं दृष्ट्वा रामः सुग्रीवं पप्रच्छ। विशालः पर्यन्तकदलीवृत एष वृक्षषण्ड आकाशे मेघ इव प्रकाशते। सखे! किमेतद्वनम्? कौतूहलात् पृच्छामि। वक्तुमर्हसि। तदा गच्छन्नेव सुग्रीवस्तद् वनमुद्दिश्याचचक्षे। राम! उद्यानवनसंपन्नं स्वादुमूलफलोदकं विस्तीर्णमेतत् श्रमनाशनमाश्रमम्। अत्र तीक्ष्णव्रता अधःशीर्षा नियमेन जलशायिनः सप्तजना नाम सप्तैव मुनय आसन्। सप्तदिनेषु सकृद् वायुभक्षा वनवासिनस्ते मुनयः सप्तभिर्वर्षशतैः सशरीरा दिवं जग्मुः। द्रुमप्राकारसंवृतमेतदाश्रमं तेषां प्रभावेण सेन्द्रैः सुरासुरैरपि सुदुराधर्षम्। पक्षिणः अन्ये

वनचारिणो जन्तवश्चैतदाश्रमं वर्जयन्ति। ये मोहादत्र विशन्ति ते पुनर्न निवर्तन्ते। अत्र विभूषणरवाः स्पष्टास्तूर्यगीतस्वनाश्च श्रूयन्ते। दिव्यो गन्धो जायते। त्रेताग्नयो दीप्यन्ते। वृक्षाग्रान् वेष्टयन्निव कपोताङ्गारुणो घनो धूमः प्रदृश्यते। धर्मात्मन् राम! लक्ष्मणेन सह तानुद्दिश्य प्रणामं कुरु। ये तान् पवित्रान् मुनीन् प्रणमन्ति तेषां किञ्चित् शरीरे अशुभं न विद्यते। ततः सहलक्ष्मणो रामस्तानृषीन् कृताञ्जलिरभ्यवादयत्। ततो हृष्टा रामलक्ष्मणसुग्रीवा वानराश्च जग्मुः। तस्मात् सप्तजनाश्रमाद् दूरमध्वानं गत्वा ते वालिपालितां दुर्धर्षां किष्किन्धां ददृशुः।

## १४

ततस्ते सर्वे किष्किन्धां त्वरितं गत्वा गहने वने वृक्षैरात्मानमावृत्य व्यतिष्ठन्त। सुग्रीवः कानने सर्वत्र दृष्टिं विसार्य मनसि भृशं कोपं समचिनोत्। सहायकैः परिवृतः स नादैरम्बरं भिन्दन्निव घोरं निनदं कृत्वा वालिनं युद्धायाजुहाव। अथ बालार्कसदृशो दृप्तसिंहगतिः सुग्रीवः क्रियादक्षं राममुवाच। वयं वालिनः पुरीं किष्किन्धां प्राप्ताः स्मः। इयं पुरी वागुरावद् वानरैर्व्याप्ता। परिशुद्धकाञ्चनतोरणा ध्वजयन्त्राढ्या चैषा विभासते। यथानुकूलः कालो लतां पुष्पफलैः पूरयति तथा त्वया वालिवधे पुरा कृतां प्रतिज्ञां क्षिप्रं सफलां कुरु। तदा रामः सुग्रीवमुवाच। अनया गजपुष्पमालया कृताभिज्ञानचिह्नस्त्वं तथाद्भुतं शोभसे यथा कदापि नक्षत्रमालया परिवृतः सूर्यः*

---

* विपरीत इवाकाशे सूर्यो नक्षत्रमालया इति पाठः। अभूतोपमेति महेश्वरतीर्थः। पक्षान्तरेऽत्र सूर्यशब्दस्य पूर्णचन्द्रार्थं ददतौ महेश्वरतीर्थगोविन्दराजौ प्रमाणश्लोकं पठतः। परीतं तु दिवा प्रोक्तं विपरीतं तु शर्वरी राकामध्यगतश्चन्द्रस्सूर्य इत्यभिधीयते।। इति। परन्तु परीतशब्दस्याहरर्थो वा विपरीतशब्दस्य रात्र्यर्थो वा अन्वेषणीयः।

शोभेत। अद्याहं संयुगे एकेन बाणमोक्षेण ते वालिसमुत्थं भयं वैरं चापनेष्यामि। भ्रातृरूपिणं वैरिणं मे दर्शय वाली विनिहतः पांसुषु यावद् वेष्टते। मम दृष्टिपथं प्राप्तः स यदि जीवन् विनिवर्तेत तर्हि भवान् सद्यो मां दोषिणमवगच्छेर्गर्हेथाश्च। तव प्रत्यक्षं मया बाणेन सप्त साला दारिताः। ततोऽद्य वालिनं मम बलेन निहतं विद्धि। कृच्छ्रे तिष्ठतापि मया धर्मासक्तेनानृतं नोक्तपूर्वम्। कथंचन न वक्ष्ये। शतक्रतुर्वर्षेण क्षेत्रे प्रसूतं कलममिव प्रतिज्ञां सफलां करिष्यामि। संभ्रमं जहीहि। सुग्रीव! तेन हि वालिन आह्वाननिमित्तं तथा शब्दं कुरु यथा स निष्पतेत्। स वाली जितकाशी स्वजयश्लाघी त्वया पूर्वं+मपराजितः प्रियसंयुगश्च। तस्मात् शीघ्रं स निष्पतिष्यति। स्वकं वीर्यं जानन्तः शूरा रिपूणां धर्षणं विशेषतः स्त्रीसमक्षं न मर्षयन्ति। हेमपिङ्गलः सुग्रीवो रामवचः श्रुत्वाम्बरं विनिर्भिन्दन्निव क्रूरनादेन ननर्द। सुग्रीवस्य शब्देन वित्रस्ता हतप्रभा गावो राजदोषेण परपुरुषपरामृष्टाः कुलस्त्रिय इवाकुला दुद्रुवुः। रणे भग्ना हया इव मृगाः शीघ्रं दधवुः। क्षीणपुण्या ग्रहा इव खगा भूमावपतन्। तदानिलचञ्चलोर्मिः समुद्र इव वेगवान् सुग्रीवो जीमूत इव प्रणनाद।

## १५

भ्रातुः सुग्रीवस्य तं निनादमन्तःपुरगतोऽमर्षणो वाली शुश्राव। तस्य सर्वभूतप्रकम्पनं निनदं श्रुतवतो वालिनो मदः सर्वो नष्टो महान् कोपश्चापतितः। रोषपूर्णशरीरः सन्ध्यातपप्रभः स वाली उपरक्त आदित्य इव सद्यो निष्प्रभतामगात्। दंष्ट्राकरालः क्रोधाद्

+ Cr पुरात्। ग्राह्यः पुरा।

दीप्ताग्निसन्निभो वाली विकसितपद्मकान्तिः समृणालो ह्रद इव बभासे। दुर्मर्षणं तं शब्दं श्रुत्वा स वेगेन पदन्यासैर्मेदिनीं दारयन्निव शीघ्रं बहिराययौ। तारा तं स्नेहात् परिष्वज्य सौहार्दं प्रदर्श्य त्रस्ता त्वरमाणा च हितोदर्कमिदमुवाच। वीर! नदीवेगमिवागतमिमं क्रोधं प्रातःकाले शयनादुत्थितो भुक्तां स्रजमिव साधु त्यज। सहसा तव निष्क्रामो मे न रोचते। अभिधास्यामि यन्निमित्तं निवार्यसे। श्रूयताम्। पूर्वं स त्वां युद्धायाकारितवान्। पुराद् बहिर्गतेन त्वया निरस्तो हन्यमानो दिशो गतः। स त्वया निरस्तो विशेषतः पीडितश्च। तस्य पुनरिहैत्याह्वानं मे शङ्कां जनयतीव। एवं नर्दतस्तस्य दर्प उद्यमो निनादस्य त्वरा चाल्पेन कारणेन न भवेयुः। इहागतं सुग्रीवमसहायं न मन्ये। कस्यापि सहायमाश्रित्य स गर्जति। प्रकृत्या निपुणो बुद्धिमांश्च सुग्रीवोऽपरीक्षितपराक्रमेण सख्यं नैष्यति। कुमारस्याङ्गदस्य वचो मया श्रुतपूर्वम्। हितं तद् वचनमहं वच्मि। रणकर्कशो विख्यातो युगान्ताग्निरिवोत्थितो रामस्ते भ्रातुः सहायः। स रामः साधूनां निवासवृक्षः। आपन्नानां परा गतिरार्तानां संश्रयो यशसश्चैकस्थानम्। स लोकज्ञानशास्त्रज्ञानसंपन्नः पितुराज्ञायां प्रवर्तमानो धातूनां शैलेन्द्र इव गुणानां महानाकरश्च। ततो युद्धे दुर्जयेनाप्रमेयेण महात्मना तेन रामेण ते विरोधो न क्षमः। शूर! अहं ते किञ्चिद् वक्ष्यामि। नायं ते दोषाविष्कारः। त्वां कोपयितुं नेच्छामि। यत्ते हितं वक्ष्यामि तत् श्रूयतां क्रियतां च। तूर्णं सुग्रीवं यौवराज्येऽभिषेचय। तत् साधु भविष्यति। यवीयसा[+] भ्रात्रा विग्रहं मा कृथाः। वैरं दूरत

---

+ Cr बलीयसा। ग्राह्यः – यवीयसा।

उत्सृज्य सुग्रीवेण संप्रीतिं तेन रामेण सह सौहृदं चाहं ते क्षमं मन्ये। यवीयान् भ्राता सुग्रीवस्ते लालनीयः। ऋष्यमूकस्थितो वा इहस्थो वा सर्वथा स ते बन्धुरेव। यदि ते मत्प्रियं कार्यं यदि मां हितामवैषि मयैवं प्रयत्नतो याच्यमानो मे वाक्यं साधु कुरुष्व।

१६

एवं ब्रुवतीं तारां वाली अलमतिप्रसंगेनेति परुषमुक्त्व पुनरुवाच। मम भ्राता शत्रुस्त्वरमाणो गर्जति। केन कारणे सहे? अपरास्तानां समरेष्वनिवर्तिनां शूराणां धर्षणसह मरणादतिरिच्यते। युद्धकामस्य हीनग्रीवस्य गर्जतः सुग्रीवस्य संरम्भं सोढुमसमर्थोऽस्मि। मत्कृते राघवं प्रति ते विषादो न कार्यः। धर्मज्ञः कृतज्ञश्च स पापं कथं करिष्यति? स्त्रीभि सह निवर्तस्व। भूयः किमनुगच्छसि? मयि सौहृदं त्वया दर्शि भक्तिश्च कृता। सम्प्रति गत्वा सुग्रीवमहं योत्स्ये। भयं जहीहि तस्य दर्पं विनेष्यामि न तु हनिष्यामि। मम प्राणैः शापितासि स्त्रीजनेन+ सह निवर्तस्व। रणे भ्रातरं जित्वा शीघ्रं निवर्तिष्ये तदा प्रियवादिनी दक्षिणा तारा वालिनं परिष्वज्य मन्दं रुद प्रदक्षिणं चकार। ततो विजयैषिणी तारा समन्त्रं स्वस्त्यय कृत्वा शोकमोहिता स्त्रीभिः सहान्तःपुरं प्रविवेश। पश्चात् क्रु वाली महान् सर्प इव श्वसन् नगरान्निर्ययौ। परमवेगवान् सर्वतो दृष्टिं चारयन् हेमपिङ्गलं सुसंवीतमवष्ट दीप्यमानमनलमिव प्रकाशमानं सुग्रीवं ददर्श। तत्र स्थितं सुग्र दृष्ट्वा परमकोपनो वाली वासो गाढं परिदधे।ततो मुष्टिमुद्य योद्धुं कृतावसरः सुग्रीवाभिमुखं ययौ। सुग्रीवोऽपि श्लिष्टमु

+ Cr जयेन। ग्राह्यः जनेन।

समुद्यम्य हेममालिनं वालिनं महत्या त्वरया ययौ। एवमापतन्तं सुग्रीवं क्रोधताम्राक्षो वाली प्रोचे। सुनिहिताङ्गुलिर्गाढो मया बद्ध एष मुष्टिर्वेगाद् विमुक्तस्ते प्राणानादाय यास्यति। एवमुक्तः क्रुद्धः सुग्रीवो मम मुष्टिस्ते प्राणान् हरन् मूर्धनि पततु इति वालिनमाह। ततो वेगतः समभिक्रम्य वालिना ताडितः शोणितोद्गारी सुग्रीवः प्रस्रवणयुक्तः पर्वत इवाभवत्। तं प्रहारमविगणयता सुग्रीवेण तेजसा सालमुत्पाट्य वज्रेण महागिरिरिव वाली गात्रेषु जघ्ने। सालताडनविह्वलः प्रचलितः स वाली सागरे गुरुभारसमाक्रान्ता नौरिवाभवत्। भीमबलविक्रान्तौ सुपर्णसमवेगौ घोरवपुषौ तौ गगने चन्द्रसूर्याविव रेजतुः। तदा वालिना भग्नदर्पो मन्दविक्रमोऽपि सुग्रीवः सामर्षस्तं प्रति युद्धे कौशल्यं शीघ्रत्वं च प्रादर्शयत्। ततो राम आशीविषोपमं शरं धनुषि संधाय वालिनं वक्षसि विव्याध। तेन वेगवता शरेणाभिहतो वाली महीतले निपपात। इन्द्रपुत्रो वाली शोणितस्वेदस्रावैरुक्षितो विचेतनः अनिलोद्धतः सुपुष्पितः अशोकवृक्ष इव भासमानः प्रभ्रंशित इन्द्रध्वज इव भुवि पपात।

## १७

रणकर्कशो वाली रामेण शरेणाभिहतो निकृत्तः पादप इव सहसा पपात। परिशुद्धकाञ्चनभूषणः स मुक्तरश्मिरिन्द्रध्वज इव भूमौ न्यस्तसर्वाङ्गः पपात। हर्यृक्षगणेश्वरे तस्मिन् भूमौ निपतिते नष्टचन्द्रं व्योमेव भूतलं कान्तिहीनं बभूव। भूमौ निपतितस्यापि महात्मनस्तस्य देहं श्रीः प्राणास्तेजः पराक्रमश्च न जहुः। शक्रदत्ता काञ्चनी रत्नभूषिता श्रेष्ठा सा माला वानरराजस्य प्राणांस्तेजः श्रियं च दधार। वीरः स हरियूथपस्तया हेममालया

सन्ध्यानुगतप्रान्तः पयोधर इवाभवत्। पतितस्यापि तस्य कान्तिस्तस्य मालायां देहे मर्मघातिनि शरे च त्रिधेव शोभते स्म। स्वर्गमार्गनयनं रामबाणासनक्षिप्तं तदस्त्रं वीरस्य वालिनः परमां गतिमावहत्। तथा संख्ये पतितं गतार्चिषमनलमिव पुण्यान्ते देवलोकात् परिच्युतं ययातिमिव महाप्रलयसमये कालेन भुवि पातितमादित्यमिव महेन्द्रमिव दुर्धर्षं दुस्सहं महेन्द्रपुत्रं व्यूढोरस्कं महाबाहुं दीप्तास्यं हरिलोचनं हेममालिनं वालिनं लक्ष्मणानुगतो रामो ददर्शोपससर्प च। रामं लक्ष्मणं च दृष्ट्वा वाली परुषं धर्मसंहितं प्रश्रितं च वाक्यमुवाच। अन्येन युद्धसंरब्धोऽहं त्वत्कारणेन निधनं गच्छामि। पराङ्मुखस्य वधं कृत्वास्मिन् कार्ये को गुणस्त्वया प्राप्तः? रामः कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः करुणवेदी प्रजाहितरतो महोत्साहः समयज्ञो दृढव्रत इति ते यशः सर्वभूतानि भुवि कथयन्ति। अहं तान् गुणान् श्रेष्ठं तव वंशं च संप्रधार्य तारया प्रतिषिद्धोऽपि सुग्रीवेण रणे समागमम्। त्वामपश्यन्तमन्येन युद्धसंलग्नं मां त्वं न विध्येरिति मया चिन्तितम्। त्वां विनाशितसद्बुद्धिं धर्मध्वजमधार्मिकं पापसमाचारं तृणावृतं कूपमिव नाजानाम्। सतां वेषधरं पापात्मानं प्रच्छन्नं पावकमिव धर्मच्छद्माभिसंवृतं त्वामहं नाभ्यजानाम्। अहं ते विषये वा पुरे वा नापकरोमि। न च त्वामवजाने+। अकिल्बिषं नित्यं फलमूलाशनं वनगोचरं वानरमप्रतियुध्यमानमन्येन युध्यमानं मां कस्मात् त्वं हंसि? त्वं नराधिपतेः पुत्रः प्रसिद्धः प्रियदर्शनोऽसि। धर्मसंमतानि जटावल्कलादिचिह्नानि च ते दृश्यन्ते। क्षत्रियकुले जातः श्रुतवान् नष्टसंशयो धर्मचिह्नावृतः

+Cr न च त्वां प्रतिजानेऽहम्। ग्राह्यः – न च त्वामवजानेऽहम्।

कः क्रूरं कर्म समाचरेत्? त्वं राजकुले जातो धर्मवानिति विश्रुतोऽपि पापात्मासि। दुर्जनस्त्वं सज्जनरूपेण किमर्थं परिधावसि? राजन्! साम दानं क्षमा धर्मः सत्यं धैर्यपराक्रमौ अपकारिषु दण्डश्च पार्थिवानां गुणाः। वयं मूलफलाशिनो वनचरा मृगाः*। एषास्माकं प्रकृतिः। त्वं नरेश्वरः पुरुषः। भूहिरण्यरजतानां कारणैर्निग्रहः प्रवर्तते। अस्माकं वासे वने वा आहारे फलेषु वा ते को लोभः? राजानो नयविनयवन्तो भवन्ति। निग्राह्याणां निग्रहमनुग्राह्याणामनुग्रहं च कुर्वन्ति। तत्र संकरो न कार्यः। राजानः स्वेच्छाचारिणो न सन्ति। त्वं तु कामप्रधानः कोपनः अस्थिरो राजवृत्तेषु संकीर्णः शरासनपरायणो वृथा यं कमपि हंसि। धर्मे ते श्रद्धा नास्ति। अर्थे च ते बुद्धिरनवस्थिता। कामवृत्तः सन्निन्द्रियैः कृष्यसे। अनपराधिनं मामिह बाणेन हत्वा जुगुप्सितं कर्म कृत्वा सतां मध्ये किं वक्ष्यसि? राजहा ब्रह्महा गोघ्नश्चोरः प्राणिवधासक्तो नास्तिकः परिवेत्ता चैते सर्वे नरकं गच्छन्ति। मम चर्माधार्यम्। अस्थि रोमाणि च वर्जितानि। त्वद्विधैर्धर्मचारिभिर्मांसान्यभक्ष्याणि। ब्राह्मणेन क्षत्रियेण च शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्च पञ्चनखा जन्तवो भक्ष्याः। मनीषिणो मे चर्मास्थीनि न स्पृशन्ति। मांसानि चाभक्ष्याणि। तथापि पञ्चनखोऽहं हतः। शीलसंपन्ना प्रमदा धूर्तेन पत्येव त्वया प्रभुणा वसुधा सनाथा नास्ति। शठः परापकारी क्षुद्रो मिथ्याविनयवान् पापस्त्वं महात्मना दशरथेन कथं जातः? छिन्नचारित्र्यकक्ष्येण सतां

---

* वालिरामयोर्विवादः अन्ये च रामायणविषया मम रामायणसमालोचननाम्नि निबन्धे (साहितीजगती १९९०) विचारिताः।

धर्मातिवर्तिना त्यक्तधर्माङ्कुशेन रामहस्तिनाहं निहतः। यदि त्वमभिमुखं मया युध्येथास्तर्हि मया निहतः अद्य वैवस्वतं देवं पश्येः। दुरासदोऽहं रणेऽदृश्येन त्वया पानवशं गतः प्रसुप्तो नरः पन्नगेनेव निहतः। प्रतिफलार्थिना त्वया सुग्रीवस्य प्रियं कर्तुं यद्यहं निहतस्तर्हि न युक्तं कृतम्। रावणमहत्वा कण्ठे बद्ध्वा ते प्रदद्याम्। यथा मधुकैटभद्वारापहृतां श्वेताश्वतरीं श्रुतिं भगवान् हयग्रीव उद्धार तथा सागरतोये वा पाताले वापि न्यस्तां मैथिलीं तवादेशादानयेयम्। मयि स्वर्गस्थे युक्तं हि यत् सुग्रीवो राज्यं प्राप्नुयात्। परन्तु अयुक्तमिदं यदधर्मेण त्वयाहं निहतः। बतेयमेव लोकरीतिः। कालो लोकं जन्ममरणादिष्वेवमेव प्रवर्तयति। यदि शक्तं तर्ह्युत्तरं साधु चिन्त्यताम्। इत्युक्त्वा शराभिघातव्यथितो वाली परिशुष्कवक्त्रो रविसंनिभं रामं समीक्ष्य तूष्णीं बभूव।

## १८

एवं निहतो विचेता वाली धर्मार्थसहितं प्रश्रितं परुषं च राममुक्त्वा विरराम। निष्प्रभमादित्यमिव मुक्ततोयं तोयदमिव उपशान्तमनलमिव स्थितं तं रामो धर्मार्थगुणसम्पन्नमुदारं च ततः प्रत्युवाच। धर्ममर्थं कामं लौकिकं सदाचारं चाविज्ञाय बाल्यान्मामिह कथं विगर्हसे? बुद्धिसंपन्नानाचार्यसंमतान् वृद्धानपृष्ट्वा त्वं मां वानरचापल्याद् वदसि। सशैलवनकाननेयं भूमिर्मृगपक्षिमनुष्याणां निग्रहानुग्रहौ चेक्ष्वाकूणां भवन्ति। धर्मात्मा सत्यवागृजुर्धर्मकामार्थतत्त्वज्ञो निग्रहेऽनुग्रहे च रतो भरत इमां पृथिवीं प्रशास्ति। तस्मिन् नयविनयसत्यविक्रमाः सन्ति। स च देशकालविद् राजा। धर्मरक्षणार्थं तेनादिष्टा वयमन्ये च पार्थिवा

धर्मप्रसारमिच्छन्तः कृत्स्नां वसुधां चरामः। धर्मवत्सले नृपतिशार्दूले तस्मिन् भरतेऽखिलां भूमिं पालयति को धर्मं नाशयेत्? परमे स्वधर्मे स्थिता वयं भरताज्ञां पुरस्कृत्य धर्ममार्गभ्रष्टं यथाविधि निगृह्णीमः। त्वमुत्सन्नधर्मा कर्मणा विगर्हितः कामवर्तनश्च राजमार्गे न स्थितः। धर्ममार्गे वर्तमानस्य ज्येष्ठो भ्राता पिता विद्यादाता गुरुश्चैते त्रयः पितरो ज्ञेयाः। धर्ममवेक्षमाणेन यवीयान् भ्राता गुणवान् शिष्यश्च पुत्रवत् चिन्त्यौ। सतां धर्मः सूक्ष्मः परमदुर्ज्ञेयश्च। सर्वभूतानां हृदयस्थ आत्मा शुभमशुभं च वेद। जात्यन्धो जात्यन्धैरिव चपलस्त्वं चपलैरनिगृहीतचित्तैर्वानरैर्मन्त्रयन् कथं धर्माधर्मौ पश्यसि? ममाभिप्रायं ते स्पष्टीकरोमि। केवलं रोषान्मां विगर्हितुं नार्हसि। सनातनं धर्मं त्यक्त्वा भ्रातुर्भार्यायां वर्तसे। अत एव त्वं मया हतः। महात्मनोऽस्य सुग्रीवस्य जीवतः पापकर्मकृत् त्वं कामात् तस्य पत्न्यां ते स्नुषायां रुमायां वर्तसे। तेन हि धर्माद् व्यतीतस्य कामवृत्तस्य तेऽस्मिन् भ्रातृभार्याभिमर्शेऽयं दण्डः प्रतिपादितः। धर्मविरुद्धस्य लोकाचारादपेतस्य दण्डादन्यत्र निग्रहं न पश्यामि। पुत्रीं भगिनीमनुजस्य पत्नीं वा यः कामात् प्राप्नुयात् तस्य दण्डो वधः स्मृतः। भरतो महीपालो वयं तस्यादेशवर्तिनस्त्वं च धर्मादतिक्रान्तः। एतदुपेक्षितुं कथं शक्यम्? प्राज्ञो भरतो धर्मेण महीं पालयन् धर्मव्यतिक्रान्तं निघ्नन् कामवृत्तानां निग्रहे पर्यवस्थितः। वयं भरतादेशं विधिं कृत्वा भिन्नमर्यादान् त्वद्विधान् निग्रहीतुं व्यवस्थिताः। सुग्रीवो मे लक्ष्मणतुल्यः सुहृत् संजातः। स स्वभार्यां राज्यं चाधिगन्तुं मया सह सख्यमकरोत्। स मे क्षेमं विधास्यति। तदा मया

वानरसंन्निधौ प्रतिज्ञा दत्ता। सा अनवेक्षितुं कथं शक्या? धर्मसहितैरेभिः कारणैर्यत् ते दण्डनं कृतं तद् भवाननुमन्यताम्। तव निग्रहः सर्वथा धर्म इत्येव द्रष्टव्यः। धर्ममनुपश्यता वयस्यस्योपकर्तव्यमेव। पापकृतो मानवा राजभिर्धृतदण्डा निर्मला भूत्वा सुकृतिन इव स्वर्गं गच्छन्ति*। पुरा कश्चित् संन्यासी त्वद्वत् पापमकरोत्। मम प्रपितामहेन मान्धात्रा यथाशास्त्रमभीप्सितं कठोरं दण्डं तस्य कृतम्। स च पापान्मुक्तः। प्रमत्तैर्वसुधाधिपैरन्यकृतं पापं प्राप्तम्। प्रायश्चित्तं कृत्वा तस्मात् पापान्मुच्यन्ते। वानरश्रेष्ठ! तस्मात् परितापेनालम्। धर्मतः कृतस्ते वधः। वयं केवलं शास्त्रानुसारिणो न तु स्वतन्त्राः। वागुराभिः पाशैर्विविधैः कपटैर्दृश्या गुप्ता वा नराः प्रधावितान् वा वित्रस्तान् वा विस्रब्धान् निकटस्थितान् वा मृगान् घ्नन्ति। मांसार्थिनो नराः प्रमत्तानप्रमत्तान् विमुखांश्च मृगान् विध्यन्ति तत्र दोषो न विद्यते। अस्मिन् लोके धर्मकोविदा राजर्षयो मृगयां यान्ति। शाखामृगस्त्वमयुध्यमानः प्रतियुध्यमानो वा मया युद्धे बाणेन निहतः। राजानो दुर्लभस्य धर्मस्य जीवितस्य लोककल्याणस्य च प्रदातार इत्यत्र संशयो नास्ति। तान् न हिंस्यान्न चाक्रोशेन्नाक्षिपेदप्रियं न वदेत्। एते राजानो देवा मानुषरूपेण महीतले चरन्ति। त्वं तु धर्ममविज्ञाय केवलरोषेण पितृपितामहानां धर्मे स्थितं मां प्रदूषयसि। रामेणैवमुक्तो वाली भृशं प्रव्यथितः प्राञ्जलिस्तं प्रत्युवाच। नरश्रेष्ठ! यत् त्वमात्थ तत् सत्यम्। तत्र संशयो नास्ति। उत्तमस्याधमः प्रतिवक्तुं न शक्नुयात्। पूर्वं मया प्रमादादयुक्तमप्रियं चोक्तम्। तत्रापि

---

* अयमभिप्रायो मनुस्मृतौ (८-३१८) वर्तते।

मामपराधिनं मा भवान् पश्यतु। त्वं विषयज्ञः प्रजाहितरतश्चासि। येन कारणेन यत् कार्यं भवतीति त्वं स्पष्टं जानासि। धर्माद् दूरगतं धर्मातिक्रान्ताग्रगण्यं मां च धर्मसंहितया वाचा परिपालय। एवं पङ्कलग्नो द्विप इव वाली बाष्पसंरुद्धकण्ठः सार्तरवो रामं संप्रेक्ष्य शनैरुवाच। अहमात्मानं तारां बान्धवांश्च न शोचामि। गुणज्येष्ठं पुत्रमङ्गदमेव शोचामि। बाल्यात् प्रभृति स लालितः। ममादर्शनाद् दीनः पीताम्बुस्तटाक इवोपशोषं गमिष्यति। कार्याकार्यविधौ त्वं निश्चयं जानासि। त्वं गोप्ता शास्ता चासि। यथा सुग्रीवे तथाङ्गदे सद्भावं विधत्स्व। यथा त्वं लक्ष्मणे भरते च प्रवर्तसे तथा सुग्रीवेऽङ्गदे च कर्तुमर्हसि। दीना तारा कमप्यपराधं न कृतवती। तथापि ममापराधेन तां चापराधिनीं मत्वा यथा सुग्रीवो नावमन्येत तथा त्वमवस्थापयितुमर्हसि। त्वयानुगृहीतस्त्वद्वशे वर्तमानस्तव चित्तमनुवर्तमानः सुग्रीवो राज्यं पालयितुं शक्ष्यति। इत्थमुक्तवन्तं स्पष्टालोचनं वालिनं राम आश्वासयत्। भवता वयं निष्कारणघातका इति न मन्तव्याः। आत्माप्यचिन्त्यः। त्वामनुग्रहीतुमेव धर्मानुसारेणैवमकुर्म। यो दण्डचे दण्डं पातयेद् यश्चापि दण्डचो दण्डचते कार्यकारणकृतार्थौ तावुभौ नावसीदतः। तेन हि भवानस्माद् दण्डसंयोगाद् विगतकल्मषो धर्मशास्त्रदृष्टेन वर्त्मना धर्म्यां स्वां प्रकृतिं गतः। एवं रामस्य समाहितं वाक्यं निशम्य वाली सुयुक्तं निजगाद। शराभितप्तेन विचेतसाजानता मया त्वं यत्किमपि प्रभाषितः। ममेदं क्षमस्व। एवं प्रार्थये।

## १९

शरपीडितः शयानः स वानरमहाराजो वाली रामेण हेतुमद्भिर्वाक्यैः प्रत्युक्तः प्रत्युत्तरं न प्रत्यपद्यत। अश्मभिः

परिभिन्नाङ्गः पादपैर्भृशमाहतो रामबाणेन चाक्रान्तः स जीवितान्तदशां प्राप्य मुमोह। तं रामबाणेन हतं भार्या तारा शुश्राव। सपुत्रा सा भर्तुः सुदारुणमप्रियं वधं श्रुत्वा भृशमुद्विग्ना विविधकक्ष्याप्रदेशाद् गिरिगह्वरान्निष्पपात। अङ्गदपरिवारा महाबला वानराः सकार्मुकं राममालोक्य त्रस्ताः प्रदुद्रुवुः। सा तान् भीतान्पलाय्याभिमुखं निपततो निहतयूथपान् यूथात् परिभ्रष्टान् मृगानिव दृश्यमानान् वानरान् ददर्श। दुःखितानिषुभिरनुबद्धानिव रामवित्रासितांस्तान् समासाद्य दुःखेनोवाच। हे वानराः! यूयं राजसिंहस्य वालिनः पुरःसराः स्थ। तं विहाय सुवित्रस्ता दुर्गताः कस्माद् द्रवथ+? किं मया श्रुता वार्ता सत्या यद् वाली राज्यहेतोः क्रूरेण भ्रात्रा रामप्रयुक्तैर्दूरपातिभिर्बाणैर्मारित इति*? कामरूपिणः कपयो वालिपत्न्याः वचः श्रुत्वा प्राप्तकालं स्पष्टं वचनमूचुः। जीवपुत्रे! निवर्तस्व। पुत्रमङ्गदं रक्ष। अन्तको रामरूपेण वालिनं हत्वा नयति। क्षिप्तान् वृक्षान् विपुलाः शिलाश्च वज्रसमैर्बाणैः समाविध्य वाली वज्रेणेव निपातितः**। शक्रसमप्रभे प्लवगशार्दूले हते वानरबलं विद्रुतं विकीर्णं चाभवत्। नगरी शूरै रक्ष्यताम्। अङ्गदश्चाभिषिच्यताम्। राज्यपदस्थं वालिनः पुत्रमङ्गदं वानरा भजिष्यन्ति। अथवा इह ते स्थानमनभिमतम्++। सुग्रीवपक्षीया वानरा अस्माकं दुर्गाण्याक्रमिष्यन्ति। अत्रत्या वानराः केचनाभार्याः केचन

---

+Cr द्रवत। ग्राह्यः – द्रवथ। * अस्मिन् श्लोके (९) चेत्शब्दः प्रश्नार्थकत्वेन ग्राह्यः। ** एते वानरा रामेण वालिहननं न ददृशुः भ्रान्त्यैवमूचुरिति भाति। ++ Cr अथवा रुचितं। अथवारुचितम् इति स पाठचः।

सहभार्याश्च। लुब्धेभ्यो विप्रयुक्तेभ्यः स्वेभ्यो नो महद् भयमस्ति*। किञ्चिद्दूरवर्तिनां तेषां वचनं श्रुत्वा तारा आत्मस्वभावानुगुणं बभाषे। कपिसिंहे महाभागे भर्तरि नश्यति मम पुत्रेण किं कार्यम्? राज्येनात्मना वा किं प्रयोजनम्? रामप्रयुक्तेन शरेण विनिपातितस्य महात्मनो मम भर्तुरेव पादमूलं गमिष्यामि। एवमुक्त्वा शोकपूर्णा शिरश्चोरश्च बाहुभ्यां समभिघ्नती रुदती प्रदुद्राव। सा गत्वा महाशूराणां दानवेन्द्राणां हन्तारं महापर्वतक्षेप्तारं महावायुसमानवेगं महामेघसमूहनिःस्वनं शक्रतुल्यपराक्रमं मांसार्थे शार्दूलेन हतं महामृगमिव निपतितं पतिं ददर्श। सर्वलोकार्चितः पताकालङ्कृतः सवेदिकः सुपर्णेन सर्पहेतोरुन्मथितो वल्मीकं परितो निर्मितश्चैत्य इव स ददृशे। दृढं धनुरवष्टभ्यावतिष्ठन्तं रामं लक्ष्मणं भर्तुरनुजं सुग्रीवं च सा ददर्श। तानतीत्य रणे निहतं भर्तारं समासाद्य समीक्ष्य व्यथिता गतचैतन्या भूमौ निपपात। सा सुप्तेव पुनरुत्थाय आर्यपुत्रेति वदन्ती मृत्युपाशैर्बद्धं पतिं दृष्ट्वा रुरोद। कुररीमिव क्रोशन्तीं तामवेक्ष्य आगतमङ्गदं च दृष्ट्वा सुग्रीवो महान्तं विषादं प्राप।

## २०

रामचापविसृष्टेन शरेण विनिहतमुन्मूलितं तरुमिव भूमौ पतितं महेन्द्रपर्वतनिभं वालिनं दृष्ट्वा परिष्वज्य तारा पर्यदेवयत्। हे शत्रुभयंकर! महाविक्रम! दीनामनपराधां मां किमद्य नाभिभाषसे? वानरश्रेष्ठ! उत्तिष्ठ। शयनोत्तमं भजस्व। एवंविधा नृपतिसत्तमा भूमौ न शेरते। वसुधाधिप! तव वसुधा अतीव कान्ता खलु।

---

* श्लोकार्थः (१६) अस्पष्टः।

गतासुरपि मां विहाय गात्रैस्तामुपगूहसे*। यतस्त्वं किष्किन्धां विहाय गच्छसि ततः प्रतीयते धर्मतः संप्रवर्तमानेन त्वयाद्य किष्किन्धेवान्या रम्या पुरी स्वर्गमार्गे व्यक्तं विनिर्मिता। मधुरसुगन्धिषु वनेष्वावयोर्विहारोऽतःपरं समाप्तः। महायूथपयूथपे त्वयि पञ्चत्वमापन्नेऽहं निराशा शोकसागरे निमग्नास्मि। विनिहतं भुवि शयितं त्वां वीक्ष्य शोकाभिसंतप्तं मम हृदयं सहस्रधा न स्फुटति। तन्मे हृदयं पाषाणसदृशं मन्ये। त्वया सुग्रीवस्य भार्या हृता स च विवासितः। तत्कर्मणः फलमिदं त्वया प्राप्तम्। तव श्रेयस्यासक्ता हितैषिण्यहं हितं वाक्यमब्रवम्। साहं त्वया मोहाद् विगर्हिता। ध्रुवं कालस्ते जीवितान्तकरः। कस्याप्यवशस्त्वं बलात् तेन कालेन सुग्रीवस्य वशं नीतः। पूर्वं मया दैन्यं दुःखं च नानुभूतम्। साहमनाथा वैधव्यं शोकसन्तापं चानुभविष्यामि। लालितः सुकुमारः सुखोचितो वीरोऽङ्गदः क्रोधपूर्णस्य पितृव्यस्य समीपे कथं वर्तिष्यते? पुत्र! धर्मवत्सलं पितरं सुष्ठु प्रेक्षस्व। वत्स! तस्य दर्शनं दुर्लभं भविष्यति। नाथ! त्वं पुत्रं समाश्वासय। एनं मूर्ध्नि समाघ्राय संदेशं देहि। प्रवासं प्रस्थितोऽसि। त्वामभिनिघ्नता रामेण महत् कर्म कृतम्।

---

* एतेन श्लोकेन (२०, ६), तथा २१–११ श्लोकेन यत्र मृतस्य वालिनः संस्कारं हनुमान् सूचयति वाली तदा मृत इति स्पष्टम्। परन्तु द्वाविंशे सर्गे वाली पुनर्भाषते। ततो रचनायां पूर्वापरविरोधः स्फुटः। अमोघरामबाणघातेन वालिनो मरणस्य निश्चितत्वात् हनुमतामृतस्यापि तस्य संस्कार उक्त इति तत्र गोविन्दराजमहेश्वरतीर्थयोर्व्याख्यानं विचित्रम्। का नामामृतं पतिं मृतं परिगणय्य विलपेत् को वा मरणात् पूर्वं संस्कारं प्रतिपादयेत्? संभवतः अत्र कथनद्वयं सम्मिलितम्। मम रामायणसमालोचननिबन्धः पठनीयः।

सुग्रीवस्य प्रतिज्ञायां तेनानृण्यं गतम्। सुग्रीव! सकामो भव। त्वं रुमां प्रतिपत्स्यसे। अनुद्विग्नो राज्यं भुङ्क्ष्व। तव रिपुर्भ्राता शस्तः। इत्युक्त्वा सा पुनः पतिमुद्दिश्य बभाषे। एवं प्रलपन्तीं प्रियां मां त्वं किं नाभिभाषसे? इमास्ते बह्वीर्वरा भार्याः पश्य। इत्थं तस्या विलपितं श्रुत्वा सर्वतो वानर्यः अङ्गदं परिगृह्य दीना दुःखार्ताः परिचुक्रुशुः। साङ्गददृढबाहो! अङ्गदं विहाय चिरप्रवासं किमद्य यासि? हे प्रियपुत्र! सद्गुणवन्तं पुत्रं विहाय एवं गन्तुं न युक्तम्। मया सुतेन वा ते किमप्रियं कृतं येन सहायिनीं मां विहायाद्य यमक्षयं गच्छसि? यदि मया तव किञ्चिदप्रियं कृतं स्यात् क्षमस्व। मूर्ध्ना तव पादौ प्रणमामि। एवं विलपन्ती तारा भर्तुः समीपे प्रायमुपवेष्टुं व्यवास्यत्।

## २१

ततोऽम्बरात् च्युतां तारामिव निपतितां तारां हनुमान् शनैराश्वासयामास। सर्वः प्राणी सुमत्या दुर्मत्या च तत्तत्फलहेतुकानि कर्माण्याचरति+। तेषां शुभाशुभफलानि प्रेत्य भुङ्क्ते। तत्र व्याकुलता न कार्या। स्वयं शोच्या त्वं कमनुशोचसि? स्वयं दीना कमनुकम्पसे? अस्मिन् देहे बुद्बुदोपमे कः कस्यानुशोच्योऽस्ति? जीवपुत्रया त्वया कुमारोऽङ्गदो द्रष्टव्यः। भविष्यति कालेऽस्य विधेयानि हितकार्याणि चिन्तय। भूतानामागमनं निर्गमनं चानियतं जानासि। विदुषि! तस्मादौर्ध्वदैहिकं कर्म कार्यम्। रोदनं न कार्यम्। यस्मिन् स्वभागधेयान्याश्रित्य हरिसहस्राणि जीवन्ति सोऽयं वाली दिष्टान्तं गतः। न्यायदृष्टार्थः सामदानक्षमापरोऽयं वाली धर्मजितां

---

+ Cr स्वकर्मफलहेतुकम्। स्वकर्म फलहेतुकम् इति स पाठ्यः।

भूमिं गतः। एनं शोचितुं नार्हसि। सर्वे वानरनायकास्ते पुत्रोऽङ्गदो हर्यृक्षपतिराज्यं च त्वया सनाथमस्ति। शोकसन्तप्तौ सुग्रीवाङ्गदौ शनैः करणीयेषु प्रेरय। त्वया परिगृहीतः अङ्गदो मेदिनीं शास्तु। संतानेन पितुर्यानि कार्याणि साम्प्रतं यच्च वालिन और्ध्वदैहिकं कर्तव्यं तत् सर्वं क्रियताम्। एषोऽस्य समयस्यानुकूलो निर्णयः। वानरराजः संस्कार्यः। अङ्गदः अभिषेच्यः। सिंहासनस्थं पुत्रं पश्यन्ती त्वं शान्तिमेष्यसि। तच्छ्रुत्वा भर्तृव्यसनपीडिता तारा हनुमन्तं प्रत्यभाषत। अङ्गदसमानानां पुत्राणां शतात् हतस्याप्यस्य वीरस्य पत्युर्गात्रसंश्लेषणं मे वरम्। अहं वानरराज्यस्य+ वा अङ्गदस्य वा विषये कमपि निर्णयं कर्तुं न प्रभवामि। तस्य पितृव्यः सुग्रीवः सर्वं निर्णयति। अङ्गदस्य योगक्षेममहं द्रक्ष्यामीति ते बुद्धिर्न कर्तव्या। पुत्रस्य हितकरो बन्धुः पिता न माता। पत्युरनुगमनं विना न मेऽन्यत् कार्यं क्षमम्। युद्धेऽभिमुखहतस्य तस्य वीरस्य सेवितमिदं शयनं मे सेवितुं क्षमम्।

## २२

मन्दासुर्मन्दमुच्छ्वसन् सर्वतो वीक्षमाणो वाली आदावेव पुत्रस्याग्रतः सुग्रीवं ददर्श। प्राप्तविजयं तं सस्नेहं स्पष्टमिदमाह। बुद्धिमोहेन बलादहं नीतः। यद्यपि मया तेऽपराधः कृतस्तथापि मां दोषदृष्ट्या मा प्रेक्षस्व। तात! आवयोर्युगपत् सुखं दैवेन न विहितम्। आवयोर्भ्रातृयुक्तः स्नेहः अन्यथा जातः। त्वमद्यैव वानरराज्यं प्राप्नुहि। मां चाद्यैव वैवस्वतक्षयं गच्छन्तं विद्धि। अहं जीवितं राज्यं विपुलां श्रियं केनाप्यवध्यो वालीति प्रसिद्धं

+ Cr हरिराजस्य। ग्राह्यः – हरिराज्यस्य।

यशश्च तूर्णं प्रजहामि। अस्यामवस्थायां यदहं वच्मि तदसुकरमपि कर्तुमर्हसि। सुखार्हं सुखसंवृद्धं बालमपि प्राज्ञं बाष्पपूर्णमुखं भूमौ पतितमङ्गदं पश्य। मम प्राणेभ्यः प्रियतरं मया हीनं मम पुत्रमौरसं पुत्रमिव सर्वतः अहीनार्थं कुर्वन् परिपालय। हे प्लवगेश्वर! यथाहं तथा त्वमप्यस्य दाता सर्वतः परित्राता भयेष्वभयदश्चासि। त्वया तुल्यपराक्रम एष तारात्मजः अङ्गदस्तेषां रक्षसां वधे तेऽग्रतो भविष्यति। बलवान् तारेयस्तेजस्वी तरुण एषोऽङ्गदो रणे विक्रम्यानुरूपाणि कर्माणि करिष्यति। सुषेणदुहितेयं तारा च सूक्ष्मविषयविनिश्चये विविधेषूपद्रवकार्येषु च सर्वतः परिनिष्ठिता। यदेषा साध्विति ब्रूयात् तन्निस्संशयं कार्यम्। तारामतं किमपि नान्यथा परिवर्तते। राघवस्य कार्यं तेऽविशङ्कया कर्तव्यम्। अकरणेऽधर्मः स्यात्। अमानितस्त्वां हिंस्याच्च। काञ्चनीमिमां मालां धर। अस्यामुदारा जयलक्ष्मीः स्थिता। मयि मृते शवस्पर्शदोषात् संप्रजह्यात्। अतः सम्प्रत्येवाधत्स्व। वालिना भ्रातृसौहृदादेवमुक्तः सुग्रीवो हर्षं त्यक्त्वा पुनर्दीनो राहुग्रस्तश्चन्द्र इव बभूव। वालिवचनात् त्यक्तवैरः शान्तः सुग्रीवस्तां काञ्चनीं मालां जग्राह। तां काञ्चनमालां दत्त्वा मुमूर्षुर्वाली स्नेहादङ्गदमुवाच। प्रियाप्रिये क्षममाणो देशकालानुगुणं प्रवर्तस्व। तत्तत्समयप्राप्तं सुखं दुःखं च सहमानः सुग्रीववशे तिष्ठ। अङ्गद! त्वं यथेच्छं प्रवर्तमानोऽपि मया लालितः। तथा प्रवर्तमानं त्वां सुग्रीवो न बहुमंस्यते। सुग्रीवस्य स्नेहरहितैरुदासीनैर्वा शत्रुभिर्वा सह मा गच्छ। भर्तृकार्यासक्तो दान्तः सुग्रीववशगो भव। कस्मिन्नप्यतिप्रणयस्ते न कार्यः। द्वेषश्च न कर्तव्यः। उभयस्य महादोषत्वादन्तरदृग्

भव। इत्युक्त्वा भृशं शरसंपीडितो विवृताक्षो विवृतभीमदर्शन उत्क्रान्तजीवितो बभूव। सिंहयुते महारण्ये वृषभे हते यथा गावस्तथा वीरे प्लवगाधिपे हते तत्र वानरा दुःखिता बभूवुः। व्यसनार्णवमग्ना तारा मृतस्य भर्तुर्वदनं समीक्ष्य छिन्नं महाद्रुममाश्रिता लतेव वालिनं परिरभ्य भूमिं जगाम।

## २३

ततस्तारा मृतस्य वालिनो मुखमुपजिघ्रन्ती तमुवाच। वीर! मम वचनमकृत्वा त्वं विषमे उपलोपचिते सुदुःखे वसुधातले शेषे। वानरेन्द्र! नूनं मही ते मत्तः प्रियतरा। तां परिष्वज्य शयानो मां न प्रतिभाषसे। हे वीर! साहसिकप्रिय! सुग्रीवस्य वशं प्राप्तोऽसि+। सुग्रीव एव पराक्रमी संजातः। एष विधिर्विस्मयावहो भवति। एते ऋक्षवानरमुख्यास्त्वां बलिनं पर्युपासते। तेषा++ मङ्गदस्य मम च विलपितं श्रुत्वा किं त्वं न प्रतिबुध्यसे? त्वयैव पुरा निहता रिपवो यत्र शायितास्तद् वीरशयनमिदम्। युधि हतस्तत्र संप्रति स्वयं शेषे। मामनाथां विहाय गतोऽसि। विपश्चिता कन्या शूराय न प्रदातव्या खलु। अकस्माद् विधवां दुर्भगीकृतां शूरभार्यां मां पश्य। मम मनस्विता भग्ना शाश्वतसुखेच्छा नष्टा। अगाधे विपुले शोकसागरे निमग्नास्मि। निहतं भर्तारं दृष्ट्वाद्य मम हृदयं शतधा न कृतम्। तन्नूनमश्मसारमयम्। मम प्रकृत्या प्रियः सुहृद् भर्ता चाहवे विक्रान्तः शूरस्त्वं पञ्चत्वं गतोऽसि। पतिहीना नारी बहुपुत्रवती धनधान्यसमृद्धापि बुधैर्विधवेत्युच्यते। वीर!

---

+ ग्राह्या – सुग्रीवस्य वशं प्राप्तो विधिरेष भवत्यहो। ++ Cr येषां ग्राह्यः– तेषां।

स्वगात्रप्रभवे रुधिरमण्डले इन्द्रगोपकृमिसवर्णास्तरणे शयने इव शेषे। महाविशालं ते शरीरं परिरब्धुं मे भुजौ न पर्याप्तौ। तच्च शरीरं समन्ततो रेणुशोणितसंवीतमस्ति। अतिदारुणे युवयोर्वैरेऽद्य सुग्रीवः कृतकृत्यः संजातो यस्य भयं रामविमुक्तेनैकेषुणा हृतम्। त्वयि पञ्चत्वमापन्ने त्वां निरीक्षमाणा तव हृदि लग्नेन शरेण गात्रसंस्पर्शने निवार्यमाणास्मि। इति विलपन्त्यां तस्यां नीलस्तस्य गात्रगतं शरं गिरिगह्वरसंलीनं दीप्तमाशीविषमिवोद्बबर्ह। निष्कृष्यमाणस्य तस्य बाणस्य द्युतिर्दिनकरादस्ताद्रिशिखरनिरुद्धो रश्मिरिव बभौ। वालिनो व्रणेभ्यो रक्तधाराः पर्वतादरुणगैरिकसंपृक्ता धारा इव सर्वशः पेतुः। रणरेणुनावकीर्णं भर्तारं विमार्जन्ती बाणसमाहतं तं शूरं नयनाश्रुभिः सिषेच। विनिहतं रुधिरोक्षितसर्वाङ्गं पतिं दृष्ट्वा पुत्रं पिङ्गाक्षमङ्गदं तारोवाच। पुत्र! पितुः सुदारुणां पश्चिमावस्थां पश्य। दुष्कर्मणा संप्रसक्तं वैरमेवमवसितम्। बालसूर्योज्ज्वलतनुं यमसादनं प्रयातं राजानं मानदं पितरमभिवादय। एवमुक्तोऽङ्गदः समुत्थायाहमङ्गद इति ब्रुवन् पीनवृत्ताभ्यां भुजाभ्यां पितुश्चरणौ जग्राह। तदा तारोवाच। त्वामभिवादयमानमङ्गदं त्वं पुत्र! दीर्घायुर्भवेति किमर्थं पूर्ववन्नाभिभाषसे? सद्यः सिंहेन पातितं गोवृषं सवत्सा गौरिव पुत्रसहायाहं गतचेतनं त्वामुपतिष्ठामि।सङ्ग्रामयज्ञेनेष्ट्वा पत्न्या मया विना नानाप्रहरणाम्भसा अस्मिन्नवभृथे कथं स्नातोऽसि? संयुगे तुष्टेन देवराजेन ते दत्तां काञ्चनमालां न पश्यामि। कथम्? मानद! मेरुपर्वतं प्रदक्षिणं कुर्वतः सूर्यस्य प्रभेव राज्यश्रीर्गतासुमपि त्वां न जहाति। त्वया मे पथ्यं वचो न स्वीकृतम्। तव निवारणे शक्ता नासम्। संयुगे हतेन त्वया सह सपुत्रा हतास्मि। श्रीस्त्वया सह मामपि विजहाति।

## २४

वालिमरणानन्तरं प्रश्रितं सुग्रीवं राम उवाच। शोकरोदनेन मृतः श्रेयसा न युज्यते। अधुना अनन्तरं कार्यं युष्माभिः करणीयम्। युष्माभिर्बहु रुदितम्। सम्प्रति लोकाचारः अनुष्ठेयः। कालातिक्रमणेन न किञ्चन कर्म कर्तुं शक्यते। लोके कालः सर्वस्य कारणम्। कालः कर्मसाधनम्। इह सर्वभूतानां नियोगेषु काल एव कारणम्। लोके कोऽपि कमपि न प्रेरयति न च प्रेरयितुं प्रभवति। जगति सर्वो जनः स्वभावमनुसृत्य प्रवर्तते। तं स्वभावं कालः प्रवर्तयते। काल आत्मानं नात्येति स च कालो दुरतिक्रमः। कोऽपि स्वभावं नातिवर्तते। ईश्वरस्य कस्मिंश्चित् पक्षपातो नास्ति। ईश्वरः स्वतः प्रसीदति। तस्य वशीकरणोपायो नास्ति। ईश्वरः पुरुषपराक्रमेण जेतुमशक्यः। तस्य मित्रज्ञातिसंबन्धो नास्ति। स जीवस्य वशे न तिष्ठति। अतः साधुदर्शी विवेकी सर्वः कालस्य परिणाम इति लोकस्य यद्धितं तदेवेश्वरो निर्दिशेद् धर्मश्चार्थश्च कामश्चेश्वरनियमेन प्रवर्तन्ते इत्यवगच्छेत्। इतो निर्गम्य वाली स्वां प्रकृतिं गतो धर्मार्थकामसंयोगैः स्वर्गं प्राप्तवान्। स्वधर्मानुष्ठानेन वालिना पूर्वमेव स्वर्गो लोको जितः। सम्प्रति प्राणानपरिरक्षता स स्वर्गः परिगृहीतश्च। वानरराजो वाली श्रेष्ठां गतिं प्राप। तस्मात् परितापेनालम्। एतत्कालोचितं विधीयताम्। रामवचनान्ते लक्ष्मणः किंकर्तव्यतामूढं सुग्रीवं प्रश्रितमुवाच। सुग्रीव! त्वं ताराङ्गदाभ्यां सहितो वालिनः दाहसंस्कारेण प्रेतकार्यं कुरु। काष्ठानि श्रेष्ठानि चन्दनानि च वालिनः संस्कारार्थं समाज्ञापय। दीनचेतसमेनमङ्गदं समाश्वासय। अज्ञबुद्धिर्मा भूः। इदं पुरं त्वदधीनम्। अङ्गदो

माल्यं विविधानि वस्त्राणि घृतं तैलं गन्धानन्यावश्यकद्रव्याणि चानयेत्। तार! त्वं झटिति गत्वा शिबिकामादाय शीघ्रमागच्छ। अस्मिन् काले त्वरा युज्यते। शिबिकावाहनोचिताः समर्था बलिनः प्लवगाः सन्नह्यन्तु। ते वालिनं श्मशानं नेष्यन्ति। एवं सुग्रीवमुक्त्वा लक्ष्मणो भ्रातुः समीपे तस्थौ। लक्ष्मणवाक्यं श्रुत्वा तारः संभ्रमेण किष्किन्धां प्रविवेश। वानरैरुह्यमानां शिबिकामादाय पुनः शीघ्रमाययौ। ततः अङ्गदेन सह विक्रोशन् सुग्रीवो वालिनमुद्यम्य शिबिकामारोपयत्। स आर्यस्यौर्ध्वदैहिकमनुरूपतः कर्तुमाज्ञापयत्। प्लवगा रत्नानि विश्राणयन्तः अग्रतो यान्तु। शिबिका तदनन्तरं यातु। इत्युक्ता वानरा भुवि राज्ञां यादृशा ऋद्धिविशेषा दृश्यन्ते तादृशैर्वालिनः शवयात्रां प्राकुर्वन्। तारप्रभृतयोऽङ्गदं परिगृह्य क्रोशन्तो ययुः। तारादयः स्त्रियः क्रोशन्त्यो भर्तारमनुजग्मुः। अरण्यमध्ये वानरीणां रुदितशब्देन सर्वतो वनानि गिरयश्च विक्रोशन्तीव। ते वानरा गिरिनद्या जलसंवृते विविक्ते पुलिने चितां चक्रुः। ततः स्कन्धात् शिबिकामवरोप्य शोकमग्नास्ते तदन्तिके तस्थुः। तदा तारा शिबिकातलशायिनं पतिं दृष्ट्वा सुदुःखिता तस्य शिरः अङ्के आरोप्य विललाप। शोकाभिपीडितमिमं जनं कस्मान्न पश्यसि? गतासोरपि ते वक्त्रं प्रहृष्टमिव सायंकालसूर्यसमवर्णं लक्ष्यते। यमो रामरूपेण त्वां कर्षति। तेन रामेणैकेषुणा सर्वा वयं विधवाः कृताः। इमा वानर्यस्ते सदा वल्लभाः पादैर्विकृष्टमध्वानमागताः। किं न बुध्यसे? इमास्तवेष्टा भार्याः। न त्वं प्रेक्षसे। भ्रातरं सुग्रीवं न वीक्षसे। एते तारप्रभृतयः सचिवाः। अयं पौरो जनः। सर्व एते परिवार्य निषीदन्ति।

एनान् वानरान् यथोचितं विसर्जय। ततः सर्वा[3*] मदिरोत्कटा वनेषु क्रीडिष्यामः। एवं विलपन्तीं पतिशोकपरिप्लुतां तारां तदा शोककर्शिता वानर्य उत्थापयन्ति स्म। ततोऽङ्गदः सुग्रीवेण सह रुदन् पितरं चितामारोपयामास। विधिवदग्निं दत्त्वा दीर्घमध्वानं प्रस्थितं पितरमप्रदक्षिणं* परिचक्राम। एवं वानरश्रेष्ठा वालिनं यथाशास्त्रं संस्कृत्य जलतर्पणप्रदानार्थं शुभजलां नदीं जग्मुः। सुग्रीवतारा** सहितास्ते वानरा नद्यामङ्गदं पुरस्कृत्य जलं सिषिचुः। काकुत्स्थो दीनेन सुग्रीवेण सह दीनो भूत्वा प्रेतकार्याण्यकारयत्।

## २५

ततः शोकाभिसंतप्तं क्लिन्नवाससं सुग्रीवं वानरमहामात्राः परिवार्योपतस्थुः। सर्वे ते पितामहमृषय इव राममभिगम्य प्राञ्जलयस्तस्थुः। तदा काञ्चनशैलकान्तिर्बालार्कनिभाननो हनुमान् प्राञ्जलिरब्रवीत्। प्रभो! भवत्प्रसादाद् वानराणामिदं पितामहपितृक्रमागतं महत् सुदुष्प्रापं राज्यं सुग्रीवः प्राप्तवान्। अयं सुग्रीवः ससुहृद्गणो भवता समनुज्ञातः सुन्दरं नगरं प्रविश्य विविधैर्गन्धैरौषधैश्च यथाविध्यभिषिक्तः सर्वाणि कार्याणि संविधास्यति। माल्यै रत्नैश्च विशेषतस्त्वामर्चयिष्यति। रम्यामिमां किष्किन्धां गिरिगुहां त्वमभिगन्तुमर्हसि। सुग्रीवं वानरराज्येऽभिषिच्य वानरान् संप्रहर्षय। एवमुक्तो बुद्धिमान् रामः प्रत्युवाच। सौम्य! हनुमन्! पितुर्निर्देशं पालयन्नहं चतुर्दशसमा ग्रामं वा पुरं वा न प्रवेक्ष्यामि। सुसमृद्धां

---

* अपसव्यं चकार। अपसव्यमप्रदक्षिणमिति महेश्वरतीर्थगोविन्दराजौ।

** तारयाप्युदकदानं तत्कुलाचार इति गोविन्दराजः। केषुचिद्देशेषु मृतस्य भर्तुः पत्नी उदकं न ददाति। पुत्रादय एव ददति। 3* सर्वा वयं त्वया सह

श्रेष्ठां किष्कन्धां वानरर्षभः सुग्रीवः प्रविशतु। क्षिप्रं स राज्येऽभिषिच्यताम्। एवं हनुमन्तमुक्त्वा रामः सुग्रीवमुवाच। वीर! इममङ्गदं यौवराज्येऽभिषेचय। वार्षिकसंज्ञिताश्चत्वारो मासाः प्रारब्धाः। अयमधिकवृष्टिमान् प्रथमः श्रावणो मासः। अयमुद्योगसमयो न भवति। त्वं पुरीं प्रविश। सहलक्ष्मणोऽहमस्मिन् पर्वते वत्स्यामि। रम्येयं गिरिगुहा विशालास्ति। अत्र वायुर्वाति। प्रभूतं जलं लभ्यते। बहूनि कमलान्युत्पलानि च चकासति। कार्तिके समनुप्राप्ते रावणवधे यतस्व। एष नः समयः। त्वं स्वमालयं प्रविश। राज्येऽभिषिञ्चस्व। सुहृदः संप्रहर्षय। इति रामेणानुज्ञातः सुग्रीवः किष्किन्धां प्रविवेश। प्रविष्टं तं वानरेश्वरमभिवाद्य बहुसहस्राणि वानराः प्रविश्य सर्वतः पर्यवारयन्। सर्वाः प्रकृतयो वानरेश्वरं सुग्रीवं शिरसा प्रणम्य सावधाना वसुधायां पेतुः। सर्वाः प्रकृतीरुत्थाप्य संभाष्य सुग्रीवो भ्रातुरन्तःपुरं प्रविवेश। अन्तः-पुरे कृतस्नानादिकं निष्क्रान्तं तं सुहृदः सहस्राक्षममरा इवाभ्यषिञ्चन्। तस्मै पाण्डुरं हेमालङ्कृतं छत्रं हेमदण्डे शुक्ले वालव्यजने चाजह्रुः। मुदिता वराः षोडश कन्याः सर्वाणि रत्नानि बीजान्यौषधानि सद्यश्छिन्नान् क्षीरिणो वृक्षप्ररोहान् कुसुमानि शुक्लानि वस्त्राणि श्वेतमनुलेपनं सुगन्धीनि स्थलजानि नीरजानि च पुष्पाणि श्रेष्ठानि चन्दनानि बहून् गन्धानक्षतान् सुवर्णं प्रियङ्गु मधु सर्पिष् दधि व्याघ्रचर्म वराहचर्मनिर्मितोपानहौ समालम्भनं गोरोचनां मनश्शिलां चादायाजग्मुः। ततो रत्नैर्वस्त्रैर्भक्ष्यैश्च द्विजर्षभान् तोषयित्वा वानरोत्तमा यथाकालं

समिद्धमग्निं मन्त्रपूतेन हविषा जुहुवुः। ततश्चित्रमाल्योपशोभिते रम्ये प्रासादशिखरे वरास्तरणसंवृते हेमप्रतिष्ठाने वरासने मन्त्रैर्विधिवत् प्राङ्मुखं सुग्रीवं स्थापयित्वा नदीनदेभ्यः समन्ततस्तीर्थेभ्यः सर्वेभ्यः समुद्रेभ्यश्च विमलाः शुभा अपः कनककुम्भेषु निधाय वानरर्षभा गजो गवाक्षो गवयः शरभो गन्धमादनो मैन्दो द्विविदो हनुमान् जाम्बवान् नलश्च प्रसन्नेन सुगन्धिना सलिलेन शास्त्रदृष्टेन महर्षिविहितेन विधिना शुभैर्वृषभशृङ्गैः काञ्चनकलशैश्च वसवो वासवमिवाभ्यषिञ्चन्। सुग्रीवेऽभिषिक्ते सहस्रशः सर्वे वानरपुङ्गवा हृष्टाः प्रचुक्रुशुः। वानरराजः सुग्रीवो रामस्य वचः कुर्वन् अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत्। अङ्गदे चाभिषिक्ते तस्मिन् सानुक्रोशा महात्मानः प्लवङ्गमाः साधु साध्विति सुग्रीवं प्रशशंसुः। गिरिगह्वरे स्थिता पताकाध्वजशोभिता रम्या किष्किन्धा नगरी हृष्टपुष्टजनाकीर्णा बभूव। तदा वीर्यवान् वानरेश्वरः सुग्रीवो महात्मने रामाय स्वं महाभिषेकं निवेदयामास। भार्यां रुमामुपलभ्य शक्रवद् राज्यमवाप।

## २६

सुग्रीवाभिषेकानन्तरं रामो भ्रात्रा सह प्रस्रवणं गिरिमाजगाम। स शैलः शार्दूलमृगसंघुष्टो भीमरवैः सिंहैर्वृतो नानागुल्मलतागूढो बहुपादपसंकुल ऋक्षवानरगोपुच्छमार्जारनिषेवितो मेघराशिनिभो नित्यं शुचिजलाश्रयश्चासीत्। सौमित्रिणा सह रामस्तस्य शैलस्य शिखरे महतीमायतां गुहां वासार्थं प्रतिगृह्य बहुदरीकुञ्जे प्रस्रवणे गिरौ न्यवसत्। स गिरिः सुसुखो बहुद्रव्यश्च बभूव। तथापि हृतां प्राणेभ्योऽपि गरीयसीं भार्यां स्मरतो रामस्य तत्र रतिरल्पापि

न बभूव। विशेषशोभया उदयपर्वते अभ्युदितं चन्द्रं दृष्ट्वा निशासु शयनं गतस्य सीतास्मरणजनितदुःखस्य बाष्पोपहतचेतसस्तस्य निद्रा नाविवेश। एवं सततं शोकपरायणं तमनुनयन् तुल्यदुःखो भ्राता लक्ष्मण उवाच। वीर! व्यथां गत्वालम्। त्वं शोचितुं नार्हसि। शोचतः सर्वार्था अवसीदन्ति। इदं ते विदितमेव। राघव! भवान् क्रियापरो देवपरायण आस्तिको धर्मशीलो व्यवसायी च। अनुद्यमस्त्वं कपटिनं राक्षसं तं शत्रुं रणे पराक्रमेण हन्तुं समर्थो न भविष्यसि। शोकं समुन्मूलय। स्थिरं व्यवसायं कुरु। ततः सपरिवारं तं राक्षसं निर्मूलं कुरु। त्वं ससागरवनाचलां पृथिवीमपि परिवर्तयितुं शक्तः। किं पुनस्तं रावणम्[+]? होमसमये दीप्तैराहुतिभिर्भस्मच्छन्नमनलमिव ते प्रसुप्तं वीर्यमहं प्रतिबोधयामि। लक्ष्मणस्य हितं शुभं तद् वाक्यमादृत्य सुहृदं स्निग्धं तं राम आह। अनुरक्तेन स्निग्धेन हितेन सत्यविक्रमयुक्तेन यद् वाच्यं तत् त्वयोक्तम्। सर्वकार्यावसादक एष शोकः परित्यक्तः। विक्रमेष्वप्रतिहतं तेजः प्रोत्साहयामि। अहं शरत्कालं प्रतीक्षे। इयं प्रावृडुपस्थिता। पश्चात् ससैन्यं राक्षसं निहनिष्यामि। तच्छ्रुत्वा हृष्टो लक्ष्मणः पुनरवदत्। शत्रुनिबर्हण! एतद् वचनं ते सदृशमुक्तम्। इदानीं स्वां प्रकृतिमुपगतोऽसि। एतत् ते श्रुतस्याभिजनस्य सदृशमुक्तम्। तस्मात् शत्रुनिग्रहं चिन्तयन् वर्षर्तुमतिक्रामय। कोपं नियम्य शरत् परिपाल्यताम्। चतुरो मासान् क्षमस्व। मृगराजसेवितेऽस्मिन्नचले शत्रुवधे समुद्यमं[++] संवर्धयन् मया सह वस।

---

+ Cr किमङ्ग पुन रावणम्। ग्राह्यः – किं पुनस्तं हि रावणम्। अथ वा पुन रावणम् इत्यत्र पुनःशब्दस्य दीर्घाभाव आर्षो मन्तव्यः (गोविन्दराजः)। ++ Cr समुद्यतः। ग्राह्यः – समुद्यमम्।

## २७

वालिनं हत्वा सुग्रीवमभिषिच्य माल्यवत्पर्वते वसन् रामो लक्ष्मणमुवाच। अयं जलागमकालः संप्राप्तः। गिरिसंनिभैर्मेघैः संवृतं नभः संपश्य। द्यौर्भास्करस्य गभस्तिभिः समुद्राणां रसं पीत्वा नवमासधृतं रसायनं गर्भं प्रसूते। मेघसोपानपङ्क्तिभिरम्बरमारुह्य दिवाकरं कुटजार्जुनमालाभिरलंकर्तुं शक्यम्। वस्त्रखण्डवत् स्निग्धा मेघाः सन्ध्यारागेण रक्ताः प्रान्तेषु श्वेताः सन्ति। तैर्मेघैराकाशो बद्धव्रण इव दृश्यते। मन्दमारुतनिःश्वासं सन्ध्याचन्दनरञ्जितं पाण्डुजलदमम्बरं कामातुरमिव भाति। घर्मपरिपीडिता नववारिपरिप्लुता एषा मही शोकसन्तप्ता सीतेव बाष्पं विमुञ्चति। मेघोदरविनिर्मुक्ताः कह्लारसुखशीतलाः केतकिगन्धिनो वाता अञ्जलिभिः पातुं शक्याः। फुल्लार्जुनः केतकैरधिवासित एष शैलः शान्तारिः सुग्रीव इव धाराभिरभिषिच्यते। मेघकृष्णाजिनधरा धारायज्ञोपवीतिनो मारुतापूरितगुहाः पर्वता वेदाध्ययनोपक्रान्ता इव लक्ष्यन्ते। हैमीभिः कशाभिरिव विद्युद्भिरभिताडितं स्तनितनिर्घोषमम्बरमन्तः सवेदनमिवास्ति। नीलमेघाश्रिता स्फुरन्ती विद्युद् रावणस्याङ्के आत्मानं मोचयितुं हस्तपादं विक्षिपन्ती दीना सीतेव मे प्रतिभाति। मेघावृता नष्टग्रहचन्द्राः पूर्वपश्चिमादिविभेदरहिता इमा दिशः प्रेयसीसंयोगसुलभानां कामुकानां हितकराः सन्ति। गिरिसानुषु पुष्पितान् कुटजान् पश्य। एते घर्मान्ते क्वचिद् बाष्पाभिसंरुद्धाः सम्प्रति वर्षागमसमुत्सुकाश्च सन्ति। एते शोकाभिभूतस्य मम कामसन्दीपनाः सन्ति। अद्य रजः प्रशान्तम्। शीतो वायुः। निदाघस्य तापादयो प्रशान्ताः। राज्ञां युद्धयात्रा स्थिता।

देशान्तरगताः स्वदेशान् यान्ति। सम्प्रति मानसवासासक्ता हंसाः सम्प्रस्थिताः। चक्रवाकाः प्रियान्विताः। अभीक्ष्णवर्षोदकविक्षतेषु मार्गेषु यानानि न संपतन्ति। प्रकीर्णाम्बुधरं क्वचित्प्रकाशं क्वचिदप्रकाशं नभः क्वचित् क्वचित् पर्वतसन्निरुद्धं शान्तमहार्णवरूपसदृशं विभाति*। शैलापगाः सर्जकदम्बपुष्पव्यामिश्रितं पर्वतधातुताम्रं नवं जलं शीघ्रतरं वहन्ति। जलस्य कलकलनादं मयूरा अनुसरन्ति। रसभराणि षट्पदसन्निकाशानि जम्बुफलानि प्रकामं प्रभुज्यन्ते। अनेकवर्णानि विपक्वान्याम्रफलानि पवनावधूतानि भूमौ पतन्ति। विद्युत्पताकाः सबलाकमाला महापर्वतशिखराकारसमाना मेघाः संयुगस्था मत्ता गजेन्द्रा इव समुदीर्णनादा गर्जन्ति। गर्भधारणार्थं मेघं कामयमाना परिसम्पतन्ती संमोदिता बलाकपङ्क्तिरम्बरस्य वातावधूता लम्बमाना रचिता श्रेष्ठश्वेतपद्ममालेव विभाति। निद्रा शनैः केशवमभ्युपैति। नदी द्रुतं सागरमभ्युपैति। हृष्टा बलाका घनमभ्युपैति। सकामा कान्ता प्रियमभ्युपैति। वनप्रदेशाः शिखिसुप्रनृत्ता जाताः। कदम्बवृक्षाः पुष्पपूर्णशाखा जाताः। वृषभा गावश्च परस्परसमानकामा जाताः। मही सस्यवनाभिरामा जाता। नद्यः प्रवहन्ति। घना वर्षन्ति। मत्तगजा नदन्ति। वनानि भान्ति। प्रियाविहीना ध्यायन्ति। शिखिनो नृत्यन्ति। वानराः सुग्रीवराज्यलाभात् संतुष्यन्ति। केतकपुष्पगन्धमाघ्राय प्रहर्षिता मत्ता गजेन्द्रा वननिर्झरेषु प्रपातशब्दाकुलिता मयूरैः सार्धं नदन्ति। धारानिपातैरभिहन्यमानाः कदम्बशाखासु विलम्बमानाः षट्चरणाः क्षणार्जितं पुष्परसावगाढं मदं शनैस्त्यजन्ति। निर्वाणाङ्गारचूर्णोत्करसमानैः परिपूर्णरसैः समृद्धैः फलैर्जम्बूद्रुमाणां

---

* अस्पष्टार्थः श्लोकः (१७)।

शाखाः षट्पदौघैर्भरिता इव प्रविभान्ति। तडित्पताकालंकृतानामुदीर्णगम्भीरमहारवाणां वलाहकानां रूपाणि रणोद्यतानां वारणानामिव विभान्ति। शैलवनमार्गे गच्छन् मत्तो गजेन्द्रः पश्चान्मेघरवं निशम्य शत्रुगजं शङ्कमानो युद्धाभिकामः प्रतिसंनिवर्तते। सुरेन्द्रदत्तं मुक्तासंकाशं जलं पतति। पत्रपुटेषु लग्नं सुनिर्मलं तज्जलं तृषिता विवर्णच्छदना विहङ्गा हृष्टाः पिबन्ति। नीलेषु मेघेषु सक्ता नववारिपूर्णा नीला मेघा दवाग्निदग्धेषु शैलेषु बद्धमूला दवाग्निदग्धाः शैला इव प्रतिभान्ति*। गजेन्द्रा मत्ताः। गवेन्द्रा मुदिताः। मृगेन्द्रा वनेषु विक्रान्ताः।+ नगेन्द्रा रम्याः। नरेन्द्रा निभृताः। सुरेन्द्रो वारिधरैः प्रक्रीडितः। नरेन्द्राणां युद्धयात्रा निवृत्ता। सेना प्रतिनिवर्तते। सलिलेन वैराणि मार्गाश्च समीकृताः। भाद्रपदमासे वेदाध्ययनं कुर्वतां सामवेदशाखीयानामध्यनसमय आगतः। कोसलाधिपो भरतो गृहकर्माणि परिसमाप्य आवश्यकवस्तुसमुदायं संचित्य सम्प्रति नूनमाषाढपूर्णिमाव्रतमभ्युपगतः। आपूर्यमाणायाः सरय्वा रयः समायान्तं मां समीक्ष्यायोध्यायाः स्वन इव नूनं वर्धते। विजितारिः सदारो महति राज्ये स्थितः सुग्रीवः अधिकगुणवतीष्वासु वर्षासु सततं सुखमश्नुते। लक्ष्मण! हृतदारो महतो राज्यात् च्युतश्चाहं क्लिन्नं नदीकूलमिवावसीदामि। मम शोको विस्तीर्णः। वर्षा भृशदुर्गमाः। रावणश्च महान् शत्रुः। सर्वमिदमपारं मे प्रतिभाति। सीतान्वेषणं सद्यः प्रारभामहे इति सुग्रीवे याचमानेऽपि इममयात्रासमयं भृशदुर्गमान् मार्गांश्च दृष्ट्वा मया न किञ्चिदपीरितम्। किं चातिपरिक्लिष्टं चिराद् दारैः समागतं

---

* (३१) भावो न ज्ञायते। + Cr विश्रान्ततरा। ग्राह्यः विक्रान्ततरा।

सुग्रीवं वक्तुं नैच्छं यतो मम कार्यं सुमहद् वर्तते। सुग्रीवो विश्रम्य कालमुपागतं ज्ञात्वा उपकारं स्वयमेव वेत्स्यते हि। अत्र संशयो नास्ति। तस्मात् सुग्रीवस्य नदीनां च प्रसादमभिकाङ्क्षन्नहं कालं प्रतीक्षे। उपकारं प्राप्य वीरो निश्चयेन प्रत्युपकारं करोति। एवमकुर्वन् सतां मनो बाधते। एवमुक्तो लक्ष्मणः कृताञ्जलिः राममुवाच। यथोक्तं सर्वमीप्सितं सुग्रीवो न चिरात् करिष्यति। रिपुनिग्रहे दृढनिश्चयो भवान् शरत्प्रतीक्ष इमं वर्षाकालं क्षमताम्।

## २८

काले गते व्योम गतविद्युद्बलाहकं सारसारवसंघुष्टं रम्यज्योत्स्नानुलेपनं च बभूव। सिद्धार्थः सुग्रीवो मन्त्रिषु न्यस्तकार्यः अभिप्रेतां स्वां पत्नीं रुमां समीप्सितां तारां च प्राप्य सदा प्रमदारतो निवृत्तान्यकार्यः सदान्तःपुरवासाभिलाषो मन्दधर्मार्थसंग्रहः अत्यन्तासन्मार्गस्थितः अहोरात्रविहारी गन्धर्वाप्सरोगणैर्नन्दने क्रीडन् देवेन्द्र इव बभूव। कदापि मन्त्रिणामनवेक्षक उत्सन्नराज्यव्यवहारः कामवृत्तश्च विचचार। तं सुग्रीवं समीक्ष्य निश्चितार्थः अर्थतत्त्वज्ञो हनुमान् तमुपागम्य सप्रश्रयं हितं सत्यं प्रीतियुक्तं चाह। राज्यं यशश्च प्राप्तम्। कुलक्रमागता श्रीरभिवर्धिता। शेषो मित्राणां संग्रहः। तद् भवान् कर्तुमर्हति। यो हि कालज्ञः सततं मित्रेषु साधु वर्तते तस्य राज्यं कीर्तिः प्रतापश्चाभिवर्धन्ते। भूमिप! यस्य कोशः सैन्यं मित्राण्यात्मनः प्रभुशक्तिश्च सर्वाणि समवेतानि भवन्ति स महद् राज्यमश्नुते। तस्माद् वृत्तसंपन्नः अपायरहिते पथि स्थितस्त्वं प्रतिज्ञातं मित्रार्थं यथावत् कर्तुमर्हसि। यो व्यतीतकाले मित्रकार्येषु प्रवर्तते स महतोऽर्थान् कृत्वापि मित्रकार्याणि न साध्नोति। वैदेह्याः परिमार्गणं राघवस्यैतत् कार्यं

क्रियताम्। तदिदं कार्यं ते कालातीतम्। प्राज्ञः कालवित् स रामस्त्वरमाणोऽपि तव वशानुगः अतीतं कालं ते न निवेदयति। रामस्ते स्फीतस्य कुलस्याभिवृद्धिहेतुः। दीर्घबन्धुः। स्वयमप्रमेयप्रभावः। गुणैरप्रतिमः। हरीश्वर! पूर्वं तेन तव कार्यं कृतम्। त्वं तस्य कार्यं कुरु। तदर्थं कपिश्रेष्ठानाज्ञापयितुमर्हसि। यावद् रामोऽस्मान् न चोदयति तावत् कालातिक्रमणदोषो न स्यात्। यदि चोदयेत् तर्हि कालव्यतिक्रमदोषः स्फुटो भवेत्। अनुपकर्तुरपि भवानुपकरोति। शत्रुवधेन राज्येन च तवोपकर्तुः किं पुनः? वानरर्क्षगणेश्वर! विक्रान्तस्त्वं दाशरथेः प्रीतिं कर्तुं शक्तिमानसि। आज्ञायां किं विलम्बसे? दाशरथिः शरैः सुरासुरमहोरगान् वशे कर्तुं कामं शक्तः खलु। त्वत्प्रतिज्ञानिर्वहणं तु स काङ्क्षति। स्वप्राणहानिमप्यविगणय्य तेन तव प्रियं कृतम्। तस्मात् तस्य भार्यां पृथिव्यामाकाशे च मृगयिष्यामहे। देवा गन्धर्वा असुरा मरुद्गणा यक्षाश्च रामस्य भयं न कुर्युः। किमुत राक्षसाः? तस्मादेवंशक्तियुक्तस्य पूर्वं ते प्रियकृतो रामस्य सर्वात्मना प्रियं कर्तुमर्हसि। कपीश्वर! तवाज्ञयास्माकं कस्यचिद् गतिः पाताले भुवि जलेऽम्बरे वा न निरुध्यते। तस्मादाज्ञापय। कः कुतः किं व्यवस्यतु+? तव कोटयधिका अप्रधृष्या वानराः सन्ति। हनुमतः काले साधु निवेदितं तद् वचनं श्रुत्वा सत्त्वसंपन्नः सुग्रीव उत्तमां मतिं चकार। स नित्यकृतोद्यममभिमतं नीलं दिक्षु सर्वेषां सैन्यानामुपसंग्रहायादिदेश। यथा मे समस्ता सेना सेनान्यश्च सर्वशः अनालस्येन सेनामुखानि समागच्छन्ति तथा कुरु। सीमापालाः शीघ्रगा व्यवसायिनः प्लवगा मम शासनात्

---

+ Cr कृते वसतु कुत्रचित्। ग्राह्यः – कुतो वापि व्यवस्यतु।

क्षिप्रं सैन्यं समानयन्तु। अनन्तरं कार्यं भवानेवानुपश्यतु। यो वानरः पञ्चदशदिनेभ्यः पश्चात् प्राप्नुयात् तस्य प्राणान्तिको दण्डो भवेत्। अत्र विचारणा न कार्या। साङ्गदो भवान् ममाज्ञामधिकृत्य वृद्धान् हरीनुपयातु। इति वीर्यवान् वानरेश्वरः सुग्रीवो व्यवस्थां विधाय वेश्म प्रविवेश।

## २९

सुग्रीवः किष्किन्धां प्रविष्टः। गगनं घनैर्विमुक्तम्। कामशोकाभिपीडितो रामो वर्षकालमुवास। स पाण्डुरं गगनं विमलं चन्द्रमण्डलं ज्योत्स्नानुलेपनां शारदीं रजनीं च दृष्ट्वा कामवृत्तं सुग्रीवं जनकात्मजां नष्टां च विचिन्त्य कालमतीतं बुद्ध्वा परमातुरो मुमोह। स मुहूर्तात् पुनः संज्ञामुपागम्य मनःस्थां वैदेहीं चिन्तयामास। पर्वतस्य हेमधातुविभूषिते शिखरे स आसीनः शारदं गगनं दृष्ट्वा मनसा प्रियां जगाम। गतविद्युद्बलाहकं सारसारवसंघुष्टं व्योम दृष्ट्वा आर्तया गिरा विललाप। सारसारवनादिनी साश्रमे मया सह सारसारवसंनादैररमत। साद्य कालं कथं यापयति? काञ्चनप्रभान् पुष्पितान् निर्मलानसनवृक्षान् दृष्ट्वा मां द्रष्टुमिच्छन्ती परन्त्वपश्यन्ती सा कथं कालं गम्रयति? या पुरा कलहंसानां स्वरेण बुध्यते स्म साद्य कथं वर्तते? सहचारिणां चक्रवाकाणां निःस्वनं निशम्य साद्य कथं भवेत्? सरांसि सरितो वापीः काननानि वनानि च चरन्नद्य तां विना सुखं न लभे। अपि शरद्गुणैर्विजृम्भमाणः कामो मद्वियोगात् सौकुमार्याच्च तां भृशं न पीडयेत्? इत्थं राम इन्द्रात् सलिलमीहमानः सारङ्ग इव एवमादि विललाप। ततो गिरिसानुषु फलार्थी संचर्य पर्युपावृत्तो लक्ष्मणो भ्रातरं

ददर्श। स विजने एकं दुःसहया चिन्तया परीतं विसंज्ञं रामं समीक्ष्य तस्य दुःखेन सोऽपि दुःखितो दीनमुवाच। आर्य! कामस्य वशीभूय किं प्राप्स्यसि? आत्मनः पुरुषकारं निह्नूय किं प्रयोजनम्? अनेन विलापेन चित्तस्थैर्यं नश्यति। चित्तस्थैर्यविनाशेन किमपि न सि चति। मनोदैन्यं हित्वा कार्ये श्रद्धां दर्शय। मनो निर्मलं कुरु। धैर्येणोपायेन च कालं वशीकुरु। सुग्रीवादीनां साहाय्यं सामर्थ्यं च संपादय। देवतोपासनादिकर्माणि कुरु यानि कार्यसिद्धेर्हेतुर्भविष्यन्ति। त्वया सनाथा जानकी परेण न प्राप्यते। ज्वलितामग्निचूडामुपेत्य न कश्चिन्न दह्यते। तच्छ्रुत्वा रामो लक्ष्मणं धर्मार्थसंगतं वचनमुवाच। लक्ष्मण! निस्संशयं यथा कार्यसिद्धिर्भवति तथावेक्षणीयम्। क्रियाविशेषा अनुवर्तितव्याः। दुष्करकार्याणां फलितं द्रष्टव्यमेव*। ततो रामो मैथिलीमनुचिन्तयन् परिशुष्यता मुखेन लक्ष्मणमुवाच। इन्द्रः सलिलेन वसुन्धरां तर्पयित्वा सस्यानि निर्वर्त्य कृतकर्माभवत्। स्निग्धगम्भीरनिर्घोषाः शैलानां द्रुमाणां चोपरि प्रचलन्तो मेघाः सलिलं विसृज्य परिश्रान्ताः। नीलोत्पलदलश्यामाः पयोधरा दश दिशः श्यामीकृत्य विमदा मातङ्गा इव शान्तवेगाः संजाताः। जलपूर्णाः कुटजार्जुनगन्धिनो महावेगा वृष्टिवाताश्च विरताः। घनानां वारणानां मयूराणां प्रस्रवणानां च नादः सहसा प्रशान्तः। महामेघैरभिवृष्टा निर्मलाश्चित्रसानवो गिरयश्चन्द्ररश्मिभिरनुलिप्ता इवाभान्ति**।

---

* ननु न चिन्त्यम् (२०) इति काकुः। चिन्त्यमेवेत्याशयः। ** अनयोः श्लोकयो (२७-२८) रन्तरे BCD प्रतिषु बहवः श्लोका विद्यन्ते। तेष्वेकः सुप्रसिद्धः चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका। अहो रागवती सन्ध्या जहाति स्वयमम्बरम्॥ इति। एते श्लोकाः प्रक्षिप्ता इति परिगणनं युक्तमेव भाति। अस्मिन् श्लोके शरद्वर्णनमध्ये सन्ध्यावर्णनमप्रस्तुतम्।

नवसंगमसंव्रीडा योषितो जघनानीव शरन्नद्यः पुलिनानि शनैः शनैर्दर्शयन्ति। जलाशयेषु जलानि प्रसन्नानि सन्ति। तेषु कुरर्यो नदन्ति। चक्रवाककीर्णास्ते शोभन्ते। परस्परबद्धवैराणां जिगीषूणां पार्थिवानामुद्योगसमय उपस्थितः। पार्थिवानामयं प्रथमो युद्धयात्रावसरः। सुग्रीवस्य तादृशं प्रयत्नं न पश्यामि। सीतामपश्यतः शोकाभितप्तस्य मम वर्षशतोपमा वार्षिकाश्चत्वारो मासा गताः। प्रियाविहीने दुःखार्ते हृतराज्ये विवासिते मयि राजा सुग्रीवः कृपां न कुरुते। अयमनाथो हृतराज्यो रावणेन धर्षितो दीनो दूरगृहः कामी मां शरणं गतश्चेत्येतैः कारणैर्दुरात्मना वानरराजेन सुग्रीवेणाहं परिभूतः। दुर्मतिः स कृतार्थः सीतायाः परिमार्गणे कालं निश्चित्य समयं कृत्वा नावबुध्यते। अतस्त्वं किष्किन्धां प्रविश्य वानरपुङ्गवं मूर्खं ग्राम्यसुखे सक्तं सुग्रीवं मम वचनाद् ब्रूहि। आश्रितानां पूर्वोपकारिणामर्थिनां संश्रुत्याशां यो हन्ति स लोके पुरुषाधमः। यो हि शुभं वा यदि वा पापमुदीरितं वाक्यं सत्यं करोति स वीरः पुरुषोत्तमः। कृतार्था येऽकृतार्थानां मित्राणां नोपकुर्वन्ति तान् मृतान् कृतघ्नान् क्रव्यादा आपि नोपभुञ्जते। नूनं रणे मया विकृष्टस्य काञ्चनपृष्ठस्य चापस्य विद्युद्गणोपमं रूपं स द्रष्टुमिच्छति। संयुगे क्रुद्धस्य मम वज्रस्य निर्घोषमिव घोरं ज्यातलनिर्घोषं पुनः संश्रोतुमिच्छति। लक्ष्मण! परिज्ञातपराक्रमेण सुग्रीवेणैवं निराकृतस्यापि त्वत्सहायस्य मम चिन्ता न स्यात्। कृतकृत्यः सुग्रीवो यत्कृतेऽयमारम्भः कृतस्तस्य समयं नाभिजानाति। वर्षाकालो निरीक्षणीय इति प्रतिज्ञाय विहरन् व्यतीतांश्चतुरो मासान् नावबुध्यते। अमात्यैः परिषदा च सह क्रीडन् स पानमेवोपसेवते। शोकदीनेष्वस्मासु दयां न कुरुते।

लक्ष्मण! त्वया किष्किन्धां गत्वा मम कोपस्य पर्यवसानं किं भवेदिति सुग्रीव उच्यताम्। तं ममेदं वचनं ब्रूयाः। सुग्रीव! समये तिष्ठ। हतो वाली येन गतः स पन्था न संकुचितः। मा वालिनः पथमनुगच्छ। मया रणे शरेण एक एव वाली हतः। सत्यादतिक्रान्तं त्वां सबान्धवं हनिष्यामि। तस्मात् लक्ष्मण! तत्र गत्वा यद्यद् हितं तत्तद् ब्रूहि। त्वरस्व। कालव्यतिक्रमो मा भूत्। वानरेश्वर! शाश्वतं धर्ममवेक्ष्य मम प्रतिश्रुतं सत्यं कुरुष्व। मम बाणैर्हतो वालिनं मा पश्येः इति तं वद। एवं तीव्रविवृद्धकोपं दीनं लालप्यमानं पूर्वजं दृष्ट्वा लक्ष्मणः सुग्रीवविषये तीव्रां मतिं चकार।

## ३०

तदा महासत्त्वो लक्ष्मणो दीनं दुःखितं समुदीर्णकोपं पूर्वजमेवमुवाच। सुग्रीवः साधुवृत्ते न स्थास्यति। कार्यफलसंबन्धान् न मंस्यते। वानरराज्यलक्ष्मीं न भोक्ष्यते। अस्य बुद्धिः पुरो न प्रवर्तते। त्वदनुग्रहप्रत्युपकारबुद्धिहीनो मतिक्षयात् स्त्रीसुखसक्तः सुग्रीवो हन्तव्यः। सः अग्रजं वालिनं पश्यतु। ईदृशस्य विगुणस्य राज्यं न देयम्। उदीर्णवेगं कोपं न धारये। अद्यासत्यं सुग्रीवं निहन्मि। वानरवीरैः सह वालिपुत्रः जानक्या अन्वेषणं करोतु। तदा निवेदितार्थं रणचण्डकोपमात्तबाणासनमुत्पतन्तं लक्ष्मणं स्वालोचितं सानुनयं च वाक्यं राम उवाच। त्वद्विधो लोके एवं पापं न समाचरेत्। यः प्रशंसनीयेन विवेकेन हिंसाबुद्धिं हन्ति स वीरः पुरुषोत्तमः। साधुवृत्तेन त्वयाद्येदं न व्यवसितव्यम्। सुग्रीवेणावयोः पूर्ववृत्तं संबन्धं स्नेहं चानुसृत्य प्रवर्तस्व। कालपर्यये समुत्क्रान्तप्रतिज्ञं सुग्रीवं रूक्षाणि परिवर्जयन्

सामोपहितया वाचा वक्तुमर्हसि। अग्रजेन यथावदनुशिष्टार्थो वीरो लक्ष्मणः किष्किन्धां प्रविवेश। भ्रातुः प्रियहिते रतः संरब्धः कालान्तकोपमो लक्ष्मणः शक्रधनुःसमानं गिरिशृङ्गाभं धनुः प्रगृह्य मन्दरपर्वत इव सुग्रीवस्य भवनं जगाम। लक्ष्मणः सदा रामवचनमनुसृत्य कार्याणि करोति। बृहस्पतिसमबुद्धिः स स्ववचसां सुग्रीवस्य वक्ष्यमाणं प्रत्युत्तरं तस्य स्वप्रत्युत्तरं चोत्तरोत्तरं सम्यक् समालोचितवान्। भ्रातुः कामक्रोधवीक्षणेन तस्य क्रोधाग्निः प्रजज्वाल। स लक्ष्मणः प्रभञ्जन इव शीघ्रं प्रययौ। आशुगो गज इव वेगेन बलेन च सालतालाश्वकर्णानन्यान् वृक्षान् गिरिकूटानि च पातयन् पद्भ्यां शिलाः शकलीकुर्वन् कार्यत्वरया दूरत्वादेकपदीं+ त्यक्त्वा गुल्मानां मध्याद् द्रुतं जगाम। स गिरीणां मध्ये बलाकीर्णां दुर्गां वानरराजस्य महापुरीं किष्किन्धां ददर्श। सुग्रीवं प्रति रोषात् प्रस्फुरमाणोष्ठः स किष्किन्धाया बहिश्चरान् भीमान् वानरान् ददर्श। तं दृष्ट्वा पर्वतमध्ये कुञ्जरप्रख्या वानराः शतशः शैलशृङ्गाणि प्रवृद्धान् महीरुहांश्च जगृहुः*। गृहीतायुधान् तान् सर्वान् दृष्ट्वा लक्ष्मणो बह्विन्धनोऽनल इव द्विगुणं क्रुद्धो बभूव। क्रुद्धं यममृत्युयुगान्ताग्नितुल्यं तं लक्ष्मणं दृष्ट्वा भयपरीताङ्गाः शतशः प्लवंगमा दिशो विदुद्रुवुः। ततो हरिपुङ्गवाः सुग्रीवभवनं प्रविश्य लक्ष्मणस्यागमनं क्रोधं च न्यवेदयन्। तदा कामी तारया सहितो रहः सक्तः सुग्रीवस्तेषां कपिमुख्यानां वचनं न शुश्राव।

---

+ Cr दूरमेकपदं त्यक्त्वा। ग्राह्यः – दूरादेकपदीं त्यक्त्वा।

* तैर्वानरैर्लक्ष्मणो न दृष्टपूर्व इत्यनुमीयते। ततो ज्ञायते दिग्भ्यो वानरसैन्यान्यागतानीति।

ततो रोमहर्षणकरा गिरिकुञ्जरमेघाभा हरयः सचिवसंदिष्टा नगर्या निर्ययुः। सर्वे ते घोरा नखदंष्ट्रायुधा विकृतदर्शनाः शार्दूलदर्पाश्चासन्। केचिद् दशनागबलाः केचित् शतनागबलाः केचित् सहस्रगजतुल्यविक्रमाश्चासन्। क्रुद्धो लक्ष्मणो हस्तगृहीतद्रुमैर्महाबलैर्व्याप्तां दुरासदां कृत्स्नां किष्किन्धामपश्यत्। तत उदग्रसत्त्वास्ते हरयः प्राकारपरिखान्तरान्निष्क्रम्याविष्कृतं तस्थुः। बुद्धिमान् स लक्ष्मणः सुग्रीवस्य प्रमादं पूर्वजमार्तं च बुद्ध्वा पुनरेव कोपवशं जगाम। दीर्घोष्णमहोच्छ्वासः कोपसंरक्तलोचनो नरशार्दूलः स लक्ष्मणः सधूमः पावक इव बभूव। बाणशल्यस्फुरज्जिह्वो धनुर्भोगवान् स्वतेजोविषसंघातः स पञ्चास्यः पन्नग इवादृश्यत। तदाङ्गदो दीप्तं कालाग्निमिव कोपितं नागेन्द्रमिव स्थितं तं समासाद्य त्रासाद् भृशं विषादमगमत्। तं रोषताम्राक्षो लक्ष्मणो वत्स! ममागमनं सुग्रीव कथ्यताम्। भ्रातृव्यसनसंतप्तो रामानुजो लक्ष्मणस्त्वत्सकाशं प्राप्तो द्वारि तिष्ठतीत्युच्यतामिति संदिदेश। तच्छ्रुत्वा शोकाविष्टोऽङ्गद पितृव्यस्य समीपमागम्य सौमित्रिरागत इत्यब्रवीत्। निद्राक्लमसंवीत सुग्रीवस्तन्न विबुद्धवान्। तदा स मद्यमत्तो मदनमोहित आसीत् तदा क्रुद्धं लक्ष्मणं प्रेक्ष्य वानरा भयमोहितचेतसस्तं प्रसादयन्त किलकिलाध्वनिं चक्रुः+। ते लक्ष्मणस्य समीपतो महौघनि वज्राशनिसमस्वनं सिंहनादं युगपच्चक्रुः। महता तेन शब्दे सुग्रीवो मदविह्वलताम्राक्षो व्याकुलस्रग्विभूषणः प्रत्यबुध्यत

---

+ द्वौ श्लोकौ ग्राह्यौ। स निद्राक्लान्तसंवीतो वानरो न विबुद्धवान्। बभू मदमत्तश्च मदनेन च मोहितः॥ ततः किलकिलां चक्रुर्लक्ष्मणं प्रे वानराः। प्रसादयन्तस्तं क्रुद्धं भयमोहविचेतसः॥

ततोऽङ्गदवचः श्रुत्वा तेनैव सह समागतौ प्लक्षः प्रभावश्च सुग्रीवमन्त्रिणौ लक्ष्मणागमनं बोधयितुं बहुविधैर्वाक्यैः शशंसतुः। सुग्रीवसम्मतावुदारबुद्धी च तावर्थधर्मयोस्तस्य मन्त्रिणावास्ताम्। आसीनं सुग्रीवं सुरप्रभुं शक्रं यथा तथा तौ पर्युपासीनौ सार्थैर्निश्चितैर्वचनैः प्रसाद्योचतुः। सत्यसन्धौ महाभागौ राज्यार्हौ राज्यदायिनौ भ्रातरौ रामलक्ष्मणौ ते वयस्यभावं संप्राप्तौ। तयोरेको लक्ष्मणो धनुष्पाणिर्द्वारि तिष्ठति। तस्य भीताः प्रवेपमाना वानरा नादान् मुञ्चन्ति। तस्य रामस्य शासनात् तद्भ्राता एष लक्ष्मणो भ्रातृवाक्यसारथिः कार्यनिश्चयरथारूढः प्राप्तः। राजन्! त्वं सपुत्रः सहबान्धवस्तस्य मूर्ध्ना प्रणम्य स्वसमये तिष्ठ। सत्यप्रतिश्रवो भव।

## ३१

बुद्धिमान् सुग्रीवः सचिवैः सहाङ्गदस्य वचः श्रुत्वा लक्ष्मणं कुपितमाकर्ण्य आसनादुदतिष्ठत्। मन्त्रपरिनिष्ठितः सुग्रीवः कार्यस्य गुरुलाघवं निश्चित्य मन्त्रविदस्तानब्रवीत्। मया किञ्चिन्न दुर्व्याहृतं न च दुरनुष्ठितम्। रामानुजो लक्ष्मणः किं कुपित इति चिन्तयामि। लक्ष्मणो दुर्हृदयैर्नित्यमन्तरदर्शिभिरमित्रैर्ममाविद्यमानान् दोषान् श्रावितः। अस्मिन् विषये सर्वैर्भवद्भिर्यथाबुद्धि यथाविधि विषयनिश्चयो निपुणं शनैश्च कार्यः। मम लक्ष्मणाद् रामाद् वा त्रासो नास्ति। तथाप्यकारणकुपितो वयस्यो संभ्रमं जनयत्येव। सर्वथा मित्रं सुकरम्। तस्य रक्षणं तु दुष्करम्। चित्तानां चञ्चलत्वादल्पेनाप्यन्यथाभावेन प्रीतिर्भिद्यते। अतोनिमित्तमहं महात्मनो रामस्य त्रस्तः। तेन मम कृत उपकारो मया प्रतिकर्तुं न शक्यः। एवं सुग्रीवेणोक्ते+ हनुमान् वानरमन्त्रिणां मध्ये स्वेन

---

+ Cr सुग्रीवेणैनमुक्तस्तु। ग्राह्यः – सुग्रीवेणैवमुक्ते तु।

तर्केणोवाच। हरिगणेश्वर! रामेण स्नेहपूर्वकं ते कृतमुपकारं यत् त्वं न विस्मरसि नैतदाश्चर्यम्। वीरेण रामेण भयं दूरत उत्सृज्य त्वत्प्रियार्थं शक्रतुल्यपराक्रमो वाली हतः। रामः सर्वथा त्वयि स्नेहादेव कुपितः। नात्र संशीतिः। अत एव भ्रातरं लक्ष्मणं प्रहितवान्। कालविदां वर! त्वं प्रमत्तः कालं न जानीषे। फुल्लसप्तच्छदश्यामा शिवा शरत् प्रवृत्ता। प्रणष्टवलाहका द्यौर्निर्मलग्रहनक्षत्रा प्रकाशते। सर्वा दिशः सरांसि सरितश्च प्रसन्नाः। हरिपुङ्गव! प्राप्तमुद्योगकालं नावैषि। त्वं प्रमत्त इति लक्ष्मण आगतः। स्पष्टमिदम्। आर्तस्य हृतदारस्य महात्मनो रामस्य पुरुषान्तरात् प्रहितं परुषं वचनं ते मर्षणीयम्। अञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनादन्तरेण क्षममन्यत् कृतापराधस्य तेऽहं न पश्यामि। नियुक्तैर्मन्त्रिभिः पार्थिवः अवश्यं हितं वाच्यः। अत एव भयं त्यक्त्वा निश्चितं वचो ब्रवीमि। अभिक्रुद्धो राघवश्चापमुद्यम्य सदेवासुरगन्धर्वं जगद् वशे स्थापयितुं समर्थो हि। पूर्वोपकारं स्मरता विशेषतः कृतज्ञेन त्वया पुनः पुनः प्रसाद्यो+ रामः कोपयितुं न क्षमः। राजन्! सपुत्रसुहृज्जनस्त्वं तस्य मूर्ध्ना प्रणम्य भर्तुर्भार्येव तद्वशे स्वप्रतिज्ञायां च तिष्ठ। कपीन्द्र! रामलक्ष्मणयोः शासनं त्वया मनसाप्यपोहितुं न युक्तम्। लक्ष्मणसहितस्य शक्रतुल्यपराक्रमस्य रामस्य मानुषं* बलं ते मनो जानाति।

## ३२

अथाङ्गदादिभिराहूतो लक्ष्मणो रामशासनाद् रम्यां किष्किन्धां प्रविवेश। तत्र द्वारस्था महाकाया महाबला हरयः सर्वे लक्ष्मणं दृष्ट्वा प्राञ्जलयस्तस्थुः। निःश्वसन्तं क्रुद्धं लक्ष्मणं दृष्ट्वा

+ Cr प्रसाद्य। ग्राह्यः– प्रसाद्यः। * दिव्यास्त्रादिबलमन्तरेण केवलं स्वाभाविकं बलम् इति गोविन्दराजः।

वानरास्तत्रसुः। तं परितो न बभूवुः। लक्ष्मणो रत्नमयीं श्रेष्ठां पुष्पितकाननां रम्यां श्रेष्ठवस्तुसमाकीर्णां तां महतीं गुहां ददर्श। हर्म्यैर्धनिनां भवनैः संबाधां नानारत्नोपशोभितां सर्वकालफलैः+ पुष्पितैर्वृक्षैरुपशोभितां किष्किन्धां ददर्श। सा नगरी देवानां गन्धर्वाणां पुत्रैः कामरूपिभिर्दिव्यमाल्याम्बरधरैः प्रियदर्शनैर्वानरैरुपशोभते स्म। सुरभिगन्धिनां चन्दनागरुपद्मानां मैरेयाणां मधूनां च गन्धैस्तस्या महापथाः सम्मोदिता बभूवुः। नैकभूमिभिर्विन्ध्यमेरुगिरिप्रख्यैः++ प्रासादैर्विमलाभिर्गिरिनदीभिश्च सा शोभते स्म। लक्ष्मणो राजमार्गे रम्यमङ्गदस्य गृहं मैन्दद्विविदगवयगवाक्षगजशरभविद्युन्मालिसंपातिसूर्याक्षहनु–मद्वीरबाहुसुबाहुनलकुमुदसुषेणतारजाम्बवद्दधिवक्त्रनीलसुपाटलसुनेत्राणां कपिमुख्यानां संपन्नानि गृहाणि ददर्श। पाण्डुराभ्रप्रकाशानि दिव्यमाल्ययुतानि प्रभूतधनधान्यानि स्त्रीरत्नैः शोभितानि च महागृहाणि ददर्श। ततः शक्रभवनमिव रम्यं श्वेतपर्वतावृतं दुरासदं सुग्रीवभवनं ददर्श। शुक्लैः कैलासशिखरोपमैः प्रासादशिखरैः सर्वेष्टफलैः पुष्पितैर्वृक्षैस्तत् शोभते स्म। तत्समीपे नीलमेघसमा दिव्यपुष्पफलाः शीतच्छाया मनोहरा इन्द्रदत्ता वृक्षा आसन्। आयुधहस्तैर्बलिभिर्वानरैस्तद् रक्षितमभवत्। श्रेष्ठाभिः पुष्पमालाभिस्तदलंकृतमभवत्। तस्य तोरणं काञ्चनेन निर्मितम्। महाबलो लक्ष्मणस्तद् गृहमवार्यमाणो भास्करो महाभ्रमिव प्रविवेश। स यानासनसमावृताः सप्त कक्ष्याः प्रविश्य सुमहद् गुप्तं हैमराजतपर्यङ्कैर्महास्तरणोपेतैर्बहुभिर्वरासनैश्च तत्र तत्रोपशोभितमन्तः–पुरं ददर्श। प्रविशन्नेव तन्त्रीध्वनियुक्तं समगीतपदाक्षरं सततं

---

+ Cr सर्वकामफलैः। ग्राह्यः – सर्वकालफलैः।

++ Cr प्रस्थैः। ग्राह्यः – Cr प्रतावविद्यमानोऽपि CD प्रतिभ्यां – प्रख्यैः।

मधुरस्वरं शुश्राव। सुग्रीवभवने लक्ष्मणो विविधाकारा रूपयौवनगर्विता बह्वीः स्त्रियो ददर्श। तत्राभिजनसंपन्नाः पुष्पमालाधारिणीः श्रेष्ठमालानिर्माणव्यग्रा भूषणोत्तमभूषिताः स्त्रियस्तृप्तानव्यग्रानुदात्तपरिच्छदान् सुग्रीवानुचरांश्च ददर्श। ततो महार्हास्तरणोपेते काञ्चने परमासने आसीनमादित्यसन्निभं दिव्याभरणचित्राङ्गं दिव्यरूपं यशस्विनं दिव्यमाल्याम्बरधरं महेन्द्रमिव दुर्जयं दिव्याभरणमालाभिः प्रमदाभिः समावृतं सुग्रीवं ददर्श। रुमां गाढं परिरभ्य* वरासनस्थो वरहेमवर्णो विशालनेत्रो वीरः सुग्रीवो महाबलं विशालनेत्रं लक्ष्मणं ददर्श।

## ३३

अप्रतिहतप्रविष्टं क्रुद्धं लक्ष्मणं दृष्ट्वा सुग्रीवो व्यथितो बभूव। क्रुद्धं निःश्वसन्तं तेजसा प्रदीप्तमिव लक्ष्यमाणं भ्रातृव्यसनसंतप्तं लक्ष्मणं दृष्ट्वा सुग्रीवः सौवर्णमासनं हित्वा महेन्द्रस्य स्वलंकृतो महान् ध्वज इव सहसोत्प्लुत्यावततार। रुमाप्रभृतयः स्त्रिय उत्पतन्तं सुग्रीवं गगने पूर्णं चन्द्रं तारागणा इवानूत्पेतुः। संरक्तनयनः सुग्रीवः कृताञ्जलिर्लक्ष्मणमासाद्य महान् कल्पवृक्ष इव तस्थौ। सतारं शशिनमिव रुमाद्वितीयं नारीमध्यगतं स्थितं सुग्रीवं क्रुद्धो लक्ष्मण उवाच। शक्तिमानभिजनसंपन्नः सानुक्रोशो जितेन्द्रियः कृतज्ञः सत्यवादी च राजा लोके पूज्यते। यो राजा अधर्मे स्थित उपकारिणां मित्राणां प्रतिज्ञां मिथ्या कुरुते तस्मान्नृशंसतरः कः स्यात्? यः अश्वदानं प्रतिश्रुत्यादत्त्वानृतं

---

* अश्रद्धेयोऽयं श्लोकः (२७) यतः सुग्रीवो रुमां परिरभ्य लक्ष्मणं न पश्येत्। अयं सर्ग एव संदेहास्पदो यतः ३०–२२ श्लोके लक्ष्मणप्रवेशसमये सुग्रीवः तारया सहितः इति कथितः।

करोति सः अश्वशतं हन्ति। तथा गवानृते गोशतं हन्ति। यः पुरुषाय प्रतिश्रुत्यानृतं करोति स आत्मानं स्वजनं च हन्ति। प्लवगेश्वर! यः पूर्वं कृतार्थो न प्रत्युपकरोति स कृतघ्नः सर्वेषां वध्यः। कृतघ्नं दृष्ट्वा ब्रह्मणा सर्वलोकादृतोऽयं श्लोको गीतः। तं निबोध। गोघ्ने सुरापे चोरे भग्नव्रते च सद्भिर्निष्कृतिर्विहिता। कृतघ्ने निष्कृतिर्नास्ति। सुग्रीव! त्वं पूर्वं कृतार्थः। परन्तु रामस्य न प्रतिकरोषि। तस्मात् त्वमनार्यः कृतघ्नो मिथ्यावादी चासि। कृतार्थेन त्वया रामकार्यसाधनमिच्छता सीतामार्गणे यत्नो ननु नाम कर्तव्यः। स त्वं मिथ्याप्रतिज्ञो ग्राम्येषु भोगेषु सक्तः। मण्डूकराविणं सर्पं त्वां रामो न विजानीते। महात्मना दयावता रामेण त्वं दुरात्मा वानरराज्यं प्रापितः। त्वं महात्मनो रामस्य कृतं यदि नाभिजानीषे तर्हि सद्यो निशितैर्बाणैर्हतो वालिनं द्रक्ष्यसि। हतो वाली येन गतः स पन्था न संकुचितः। सुग्रीव! समये तिष्ठ। वालिनः पन्थानं मा अनुगाः। नूनं त्वं रामकार्मुकमुक्तान् वज्रसन्निभान् शरान् न पश्यसि। तस्मात् सुखी भूत्वा मनसापि रामकार्यं नावेक्षसे।

## ३४

तथोक्तवन्तं सौमित्रिं तारोवाच। लक्ष्मण! अयं वानरेश्वरो नैवं वक्तव्यः। विशेषतस्तव बक्त्रात् परुषं श्रोतुं नार्हति। कपीश्वरः सुग्रीवः अकृतज्ञः शठः क्रूरः अनृतकथो जिह्मश्च न भवति। रणे रामेणान्यदुष्करमुपकारं कृतं सुग्रीवो न विस्मरति। रामप्रसादात् सुग्रीवः कीर्तिं शाश्वतं वानरराज्यं रुमां मां च प्राप्तवान्। पूर्वमेष निद्रामपि+ सुदुःखेनालभत।

---

+ Cr शायितः। ग्राह्यः– Cr प्रतावविद्यमानः BCD प्रतिषु विद्यमानः पाठः शयितः।

अधुनेदमुत्तमं सुखं प्राप्य विश्वामित्रमुनिवत् प्राप्तकालं न जानीते। धर्मात्मा महामुनिर्विश्वामित्रो घृताच्यां* संसक्तो दशवर्षाण्यहोऽमन्यत किल। कालविदां वरो महातेजा विश्वामित्रः प्राप्तकालं नाजानात्। पृथग्जनस्य किं वक्तव्यम्? देहधर्मं गतस्य परिश्रान्तस्य कामेष्ववितृप्तस्यास्य राम इह क्षन्तुमर्हति। तात! लक्ष्मण! निश्चयार्थमविज्ञाय प्राकृतवत् सहसा रोषवशं गन्तुं नार्हसि। उत्तमबुद्धियुक्तास्त्वद्विधाः पुरुषा अविमृश्य सहसा रोषवशं न यान्ति। धर्मज्ञ! समाहिताहं सुग्रीवार्थं त्वां प्रसादये। रोषसमुत्पन्नो महानयं संरम्भस्त्यज्यताम्। सुग्रीवो रामप्रियार्थं रुमां मां कपिराज्यं धनधान्यवसूनि च त्यजेदिति मे मतिः। सुग्रीवो रावणं रणे हत्वा शशाङ्कं रोहिण्येव रामं सीतया समानेष्यति। लङ्कायां राक्षसा असंख्याः सन्ति किल। दुर्धर्षान् कामरूपिणस्तानहत्वा रावणो हन्तुमशक्यो येन मैथिली हृता। ते राक्षसाः क्रूरकर्मा रावणश्चासहायेन रामेण केवलसुग्रीवसहायेन वा रणे हन्तुमशक्याः। रावणबलं वाली ममाख्यातवान्। सोऽभिज्ञः। कथमेतावद्बलागम इति न जाने। वालिनः श्रवादहं ब्रवीमि। तस्माद्+ युद्धे सहायनिमित्तं सुबहून् वानरानानेतुं वानरपुङ्गवाः प्रेषिता हि। विक्रान्तान् सुमहाबलान् तान् प्रतीक्षमाणोऽयं सुग्रीवो राघवस्यार्थसिद्ध्यर्थं न निर्याति। सुग्रीवेण यथा पुरा संस्था कृता तथा महाबलैः सर्वैस्तैर्वानरैरद्यागन्तव्यम्। अद्य ऋक्षकोटिसहस्राणि गोलाङ्गूलशतानि दीप्ततेजसां कपीनामनेकाः कोटयश्च त्वामुपयास्यन्ति। कोपं जहीहि। सुग्रीवस्त्रियस्तवेदं मुखं कोपात् क्षतजसमे नयने च निरीक्षमाणाः क्षुभ्यन्ति। सर्वा वयं वालिवधरूपस्य प्रथमभयस्य शङ्किताः स्मः।

---

* इदं कथनं बालकाण्डकथनाद् भिद्यते। बालकाण्डे विश्वामित्रस्य मेनकासंग उक्तः। + Cr त्वत्सहायनिमित्तं। ग्राह्यः – तत्सहायनिमित्तं।

# ३५

इति तारया प्रश्रितं धर्मसंहितं वाक्यमुक्तो मृदुस्वभावः सौमित्रिस्तदङ्गीचकार। तस्मिन् वाक्ये प्रतिगृहीते सुग्रीवो लक्ष्मणात् महान्तं त्रासं क्लिन्नं वस्त्रमिव तत्याज। ततो वानरेश्वरः सुग्रीवः कण्ठगतं चित्रं बहुगुणं महन्माल्यं चिच्छेद विमदश्चाभवत्। लक्ष्मणं संप्रहर्षयन् प्रश्रितं वाक्यमब्रवीत्। प्रणष्टा श्रीः कीर्तिः कपिराज्यं च रामप्रसादान्मया पुनः प्राप्तम्। स्वेन कर्मणा ख्यातस्य तस्य देवस्य तादृशं विक्रमं प्रतिकर्तुं कः शक्तः? धर्मात्मा राघवः सहायमात्रेण मया स्वेन तेजसा सीतां प्राप्स्यति रावणं हनिष्यति। येन सप्त महाद्रुमा गिरिर्वसुधा चैकेन बाणेन दारितास्तस्य रामस्य सहायकृत्यं किमर्थम्? यस्य धनुर्विस्फारशब्देन सशैला भूमिः कम्पिता तस्य रामस्य सहायैः किं प्रयोजनम्? ससैन्यं रावणं हन्तुं गच्छतो रामस्याहमनुयात्रां करिष्ये। विश्वासात् प्रणयेन वा यदि किञ्चिदतिक्रान्तं प्रेष्यस्य मे क्षमितव्यम्। कश्चिन्नापराध्यति इति न। इति सुग्रीवे ब्रुवति लक्ष्मणः प्रीतोऽभवत् प्रेम्णा चेदमुवाच। वानरेश्वर सुग्रीव! नाथेन विशेषतः प्रश्रितेन त्वया मम भ्राता सर्वथा सनाथो हि। अनेन प्रभावेण शुचिभावेन च त्वं श्रेष्ठां कपिराज्यश्रियं भोक्तुमर्हः। त्वया सहायेन प्रतापवान् रामः शत्रून् रणेऽचिराद् हनिष्यति। अत्र संशयो नास्ति। धर्मज्ञस्य कृतज्ञस्य संग्रामेष्वनिवर्तिनस्तवेदं भाषितमुपपन्नम्। वानरसत्तम! मम ज्येष्ठं त्वां च वर्जयित्वा अन्यः कः सामर्थ्ये सति स्वदोषं विज्ञायैवं भाषितुमर्हति? दैवतैश्चिराय दत्तः सहायस्त्वं विक्रमेण बलेन च रामस्य सदृशोऽसि। किं तु त्वं मया सहेतः शीघ्रं निष्क्राम।

भार्याहरणदुःखितं वयस्यं सान्त्वयस्व। सखे! शोकाभिभूतस्य रामस्य भाषितं श्रुत्वा मया त्वं परुषाण्युक्तः। तन्मे क्षमस्व।

३६

महात्मना लक्ष्मणेनैवमुक्तः सुग्रीवः पार्श्वे स्थितं सचिवं हनुमन्तमुवाच। पृथिव्यां स्थितान् सर्ववानरान् क्षिप्रमानय।* मया प्रथमं प्रेषितान् दूतान् त्वरयितुमपरान् वानरान् भूयस्त्वं संप्रेषय। ये वानराः कामेषु प्रसक्ता दीर्घसूत्रा वा स्युर्मम शासनात् सर्वांस्तान् शीघ्रमिहानयस्व। ये ममाज्ञया दशभिरहोभिर्नागच्छन्ति राजशासनदूषकास्ते दुरात्मानो हन्तव्याः। मम निदेशे स्थिता शतानि सहस्राणि कोटचश्च कपिसिंहाः प्रायान्तु। मेघपर्वतसंकाशा घोररूपाः कपिश्रेष्ठा अम्बरं छादयन्त इव मच्छासनादितः प्रायान्तु। ये वानराणां निवासस्थानानि जानन्ति ते सर्वे वानराः शीघ्रगमनेन गत्वा पृथिव्यां सर्वान् वानरान् मम शासनादानयन्तु। वानरराजस्य वचः श्रुत्वा हनुमान् सर्वासु दिक्षु विक्रान्तान् वानरान् प्रेषयामास। राज्ञा प्रहिताः पक्षिनक्षत्रमार्गसंचरणसमर्था हरयस्तत्क्षणेनाकाशं प्रयाताः। ते वानराः समुद्रेषु गिरिषु वनेषु सरस्सु च सर्वान् वानरान् रामहेतोरचोदयन्। मृत्युयमसमानस्य राजराजस्य सुग्रीवस्याज्ञां श्रुत्वा सुग्रीवभयं प्रदर्शयन्तो वानरा आययुः। ततस्तस्माद् गिरेरञ्जनसंकाशा महाबलास्तिस्रः कोटचो वानरा रामसमीपं निर्ययुः। अस्ताचलवासिनस्तप्तहेमसमाभासा दश कोटचो वानराः प्रययुः। सिंहकेसरवर्चसां कोटिसहस्राणि कैलासशिखरेभ्यः समागमन्। फलमूलेन जीवतां हिमवन्तमुपाश्रितानां वानराणां कोटिसहस्राणां सहस्रं समवर्तत। विन्ध्यादङ्गारकसमानानां

* २–१० श्लोकाः संक्षिप्ताः।

भीमानां भीमकर्मणां वानराणां कोटीनां सहस्राणि द्रुतमापतन्। क्षीरसमुद्रतीरनिवासिनां तमालवनवासिनां नारिकेलाशनानां चागतानां संख्या न विद्यते। महाबला वानरी सेना दिवाकरं पिबन्तीव वनेभ्यो गुहाभ्यः सरिद्भ्यश्चागच्छत्। सर्ववानरान् त्वरयितुं प्रथमं याता वानरा हिमवच्छैले+ भगवतः शङ्करस्य यज्ञशालायां स्थितं महाद्रुमं ददृशुः। पुण्ये तस्मिन् गिरिवरे पुरा सर्वदेवमनस्तोषः सुमनोरमो माहेश्वरो यज्ञो बभूव। तत्र वानरा अन्ननिष्यन्दजातानि अमृतवन्मधुराणि मूलानि फलानि च ददृशुः। तदन्नसंभवानि दिव्यानि मनोहराणि फलानि मूलानि च यः सकृदश्नाति स मासं बुभुक्षारहितो भवति। फलाशना हरिपुङ्गवा दिव्यानि तानि मूलानि फलान्यौषधानि च जगृहुः। तत्र गता वानरास्तस्माद् यज्ञायतनात् सुरभीणि पुष्पाणि च सुग्रीवस्य प्रियं कर्तुमानिन्युः। सर्वे ते हरिवराः पृथिव्यां सर्ववानरान् संचोद्य यूथागमनात् प्रागेव त्वरितं जग्मुः। ते किष्किन्धां प्राप्य सुग्रीवमुपतस्थुः। फलमूलौषधीः समर्प्य तमूचुः। सर्वे शैला वनानि समुद्राश्च परिगताः। पृथिव्यां स्थिताः सर्वे वानरा उपयान्ति। तच्छ्रुत्वा हृष्टः सुग्रीवस्तेषां सर्वमुपायनं प्रतिजग्राह।

## ३७

उपाहृतं तत् सर्वमुपायनं प्रतिगृह्य सुवचनैः सर्वांस्तान् वानरान् सुग्रीवो व्यसृजत्। कृतकर्मणः शूरांस्तान् वानरान् विसृज्य स आत्मानं राघवं च कृतार्थं मेने। ततो लक्ष्मणः सुग्रीवं संप्रहर्षयन् प्रश्रितं वाक्यमब्रवीत्। सौम्य! यदि ते रोचते किष्किन्धाया विनिष्क्राम। तच्छ्रुत्वा परमप्रीतः सुग्रीव उवाच। एवं भवतु

+ Cr हिमवच्छैलं। ग्राह्यः – हिमवच्छैले।

गच्छाम। त्वच्छासने मया स्थेयम्। इत्युक्त्वा स तदा तारामन्याश्च योषितो विसर्जयामास। आगच्छत इत्युच्चैर्वानरश्रेष्ठानवदत्। ततः स्त्रीदर्शनक्षमाः सर्वे वानरा बद्धाञ्जलिपुटाः शीघ्रमाययुः। ततः अर्कसदृशप्रभो राजा सुग्रीवः प्राप्तान् तान् शिबिकामानेतुमादिदेश। ततः शीघ्रगमना हरयः सुन्दरां शिबिकां समुपस्थापयामासुः। सुग्रीवो लक्ष्मणमारोढुमुक्त्वा बलिभिर्वानरैरुह्यमानं काञ्चनं यानं तेन सहारुरोह। श्रेष्ठराज्यलक्ष्मीसमेतः सुग्रीवो वन्दिभिरभिनन्दितो मूर्धनि ध्रियमाणेन पाण्डुरेणातपत्रेण समन्ततो धूयमानैर्वालव्यजनैः शङ्ख-भेरीनिनादैश्च सह निर्ययौ। स शस्त्रपाणिभिः शूरैर्बहुभिर्वानरशतैः परिकीर्णो रामसमीपं ययौ। राममासाद्य कृताञ्जलिस्तस्थौ। वानराश्च कृताञ्जलयोऽतिष्ठन्। मुकुलितकमलपूर्णं तटाकमिव वानराणां महत् सैन्यं दृष्ट्वा रामः सुग्रीवे प्रीतिमानभूत्। मूर्ध्ना पादयोः पतितं सुग्रीवमुत्थाप्य रामः प्रेम्णा बहुमानाच्च परिषष्वजे। ततो निषीदेति तमुवाच। निषण्णं तं पुनराह। हरिसत्तम! यो राजा सततं धर्ममर्थं कामं च काले विभज्य निषेवते स एव राजा भवति। यो धर्ममर्थं च हित्वा कामं निषेवते स वृक्षाग्रे सुप्त इव पतितः प्रतिबुध्यते। शत्रुवधे युक्तो मित्राणां संग्रहे रतो राजा धर्मेण युज्यते। धर्मार्थकामफलं च भुङ्क्ते। शत्रुनिषूदन! एष उद्योगसमयः प्राप्तः। मन्त्रिभिर्हरिभिः सह संचिन्त्यताम्। एवमुक्तः सुग्रीवो राममुवाच। प्रणष्टा श्रीः कीर्तिः कपिराज्यं च त्वत्प्रसादात् पुनः प्राप्तम्। तव ते भ्रातुश्च प्रसादेन कृतमुपकारं यो न प्रतिकुर्यात् स धर्मदूषकः स्यात्। शतश एते वानरमुख्याः पृथिव्यां बलिनः सर्ववानरानादाय

प्राप्ताः। कान्तारदुर्गाणामभिज्ञा घोरदर्शना ऋक्षा वानराः शूरा गोलाङ्गूलाश्च देवगन्धर्वपुत्राः कामरूपिणो वानराश्च स्वैः स्वैः सैन्यैः परिवृताः पथि वर्तन्ते। बहुशतकोटचो वानरा महेन्द्रसमविक्रमा मेघपर्वतसंकाशा मेरुविन्ध्यकृतालया वानरसेनान्य आगमिष्यन्ति। ते त्वामभिगमिष्यन्ति। युद्धे सबान्धवं राक्षसं रावणं निहत्य मैथिलीमानेष्यन्ति। ततो वीर्यवान् रामो निदेशवर्तिनः सुग्रीवस्य समुद्योगमवेक्ष्य हर्षात् प्रबुद्धनीलोत्पलतुल्यनेत्रो बभूव।

## ३८

इति ब्रुवाणं कृताञ्जलिं सुग्रीवं संपरिष्वज्य रामः प्रत्युवाच। इन्द्रेण वर्षपातः सहस्रांशुनादित्येन नभसो वितिमिरीकरणं चन्द्रमसा रश्मिभिः पृथिव्या निर्मलीकरणं त्वद्विधेन मित्राणां प्रीतिकरणं+ च भुवि चित्रं न भवेत्। सौम्य सुग्रीव! एवं त्वयि मित्रहितसाधनरूपः शोभनो गुण आश्चर्यकरो न भवेत्। त्वां सततं प्रियवादिनमहं जानामि। सखे! त्वत्सनाथः संख्ये सकलानरीन् जेतास्मि। शोभनहृदयो वयस्यस्त्वमेव मे साहाय्यं कर्तुमर्हसि। राक्षसाधमो रावणो वञ्चयित्वा वैदेहीमनुह्लादः पौलोमीं शचीमिवात्मविनाशाय जहार। न चिरात् तं रावणमरिहा शतक्रतुः पौलोम्या दृप्तं पितरमिव* निशितैः शरैर्हनिष्यामि। एवं तयोर्भाषमाणयोर्गगने सहस्रांशोरुष्णां तीव्रां प्रभां छादयद् रजः समभ्यवर्तत। तेन रजसा व्याप्ता दिशः पर्याकुला आसन्।

---

+ Cr प्रतिकुर्यात्। ग्राह्यः – प्रीतिं कुर्यात्। * दानवस्य पुलोमस्य पुत्री शची इन्द्रं प्रत्यनुरक्ता आसीत्। परन्तु तां पुलोमानुमत्या अनुह्लादो जहार। इन्द्रः अनुह्लादं पुलोमं च हत्वा शचीं स्वगृहमानयत्। इति पुराणकथेति गोविन्दराजः। तत्रैव पुलोमशब्दः अदन्तत्वेन दत्तः।

सशैलवनकानना मही सर्वा चचाल। ततः पर्वतसंकाशैस्ती–क्ष्णदंष्ट्रैर्महाबलैरसंख्येयैः प्लवङ्गमैः कृत्स्ना भूमिः संछादिता। निमेषान्तरमात्रेण कामरूपिभिः कोटीशतपरीवारैर्हरियूथपैर्भूमिरावृता। तेषां केचिन्नदीतीरेषु केचित् पर्वतेषु केचित् समुद्रतीरेषु केचिदरण्येषु च निवसन्ति स्म। ते मेघवन्निनदन्ति स्म। तेषां केचिदुदयमानादित्यवर्णाः केचित् शशिगौराः केचित् पद्मकेसरवर्णाश्चासन्। केचिन्मेरुपर्वतकृतालया बभूवुः। तदा दशभिः कोटीसहस्रैः श्रीमान् वीरः शतबलिर्नाम वानरः प्रत्यदृश्यत। काञ्चनशैलाभो वीर्यवान् तारायाः पिता सुषेणो बहुसाहस्रैः कोटिभिर्वानरैः प्रत्यदृश्यत। पद्मकेसरसंकाशस्तरुणार्कनिभाननो बुद्धिमान् वानरश्रेष्ठः सर्ववानरसत्तमो हनूमतः पिता श्रीमान् केसरी वानराणामनीकैर्बहुसाहस्रैः समन्वितः प्रत्यदृश्यत। वानराणां कोटिसहस्रेण वृतो गोलाङ्गूलमहाराजो भीमविक्रमो गवाक्षोऽदृश्यत। शत्रुनिबर्हणो धूम्रो भीमवेगानामृक्षाणां द्वाभ्यां कोटिसहस्राभ्यां समभ्यवर्तत। पनसो नाम महावीर्यो यूथपस्तिसृभिः कोटिभिर्महाचलनिभैर्घोरैर्वानरैर्वृत आजगाम। अथ दशभिः कोटिभिर्वृतो नीलाञ्जनचयाकारो महाकायो नीलो नाम यूथपो ददृशे। बलवान् दरीमुखो यूथपः कोटिसहस्रेण वानरैर्वृतः अभ्येत्य सुग्रीवं समुपतस्थौ। महाबलावश्विपुत्रौ मैन्दद्विविदावेकैकशः कोटिकोटिसहस्रेण वानरैराजग्मतुः। कोटिसहस्राणां सहस्रेण शतेन च वानरैः पृष्ठतोऽनुगतो गन्धमादनः प्राप्तः। ततः पितृतुल्यपराक्रमो युवराजोऽङ्गदः पद्मसहस्रेण शङ्कुशतेन च वानरैर्वृतः प्राप्तः। नक्षत्रतुल्यकान्तिर्भीमपराक्रमस्तारो वानरः पञ्चभिर्हरिकोटीभिर्दूरतः प्रत्यदृश्यत। एकादशानां कोटीनामीश्वरो वीरो यूथप इन्द्रजानुः कपिस्तैर्वानरैः संवृतः प्रत्यदृश्यत।

प्रत्यग्रादित्यसंनिभो रम्भः अयुतेन सहस्रेण शतेन च वृतः अनुप्राप्तः। यूथपतिर्वीरो बली दुर्मुखो नाम वानरो द्वाभ्यां कोटिभ्यां परिवृतः प्रत्यदृश्यत। हनुमान् कैलासशिखराकारैर्भीमविक्रमैः कोटिसहस्रेण वानरैर्वृतः प्रत्यदृश्यत। महावीर्यो नलश्चापि कोटीशतेन सहस्रेण शतेन च द्रुमवासिभिर्वानरैः संवृतः संप्राप्तः। शरभः कुमुदो वह्निः रम्भः अन्ये च बहवः कामरूपिणो वानराः सर्वां पृथिवीं पर्वतान् वनानि चावृत्याप्लवमाना गर्जन्तश्चाभ्रगणाः सूर्यमिव सुग्रीवमभ्यवर्तन्त। प्रहृष्टा बलशालिनश्च ते बहुशब्दान् कुर्वाणा नम्रशिरस आत्मानं सुग्रीवाय न्यवेदयन्। अपरे वानरश्रेष्ठा यथोचितं सम्मिल्य सुग्रीवेण समागम्य प्राञ्जलयः स्थिताः। धर्मज्ञः सुग्रीवस्त्वरितः प्राञ्जलिः स्थित्वा त्वरितानागतान् तान् सर्वान् रामाय निवेद्य तानब्रवीत्। हे वानरवीराः। पर्वतेषु निर्झरेषु वनेषु च यथासुखं विधिवद् बलानि निवेशयत। बलज्ञो रामो बलं निरूपयितुं समर्थो भविष्यति।

## ३९

अथ बलवैभवसम्पन्नः सुग्रीवो राममुवाच। मद्विषयवासिनो बलिनः कामरूपिणो महेन्द्राभा वानरेन्द्रा आगता विनिविष्टाश्च। दैत्यदानवसंनिभा घोरा इमे वानरनायका भीमविक्रमैर्बहुसाहस्रैर्हरिभिः सहागताः। ख्यातकर्मापदाना बलवन्तो जितक्लमाः पराक्रमेषु विख्याता उद्यमेषूत्तमाः पृथिव्यम्बुचरा नानानगनिवासिनो बहुसंख्या* इमे वानरास्तव किंकराः प्राप्ताः। सर्वे निदेशवर्तिनः प्रभुहिते स्थिता एते तवाभिप्रेतमनुष्ठातुं शक्ष्यन्ति। नरश्रेष्ठ! प्राप्तकालमुच्यताम्। त्वद्वशे युक्तमेतत्सैन्यमाज्ञापयितुमर्हसि। यद्यप्येषां करणीयं मम पूर्णतो विदितं तथापि यथास्थितमाज्ञापयितुमर्हसि।

---

* कोटयग्रशः इति पाठः। कोटयग्रश इति बहुसंख्योपलक्षणम् इति गोविन्दराजः।

तथा ब्रुवाणं सुग्रीवं संपरिष्वज्य राम इदमुवाच। सौम्य! वैदेही यदि जीवति वा न वा रावणो यस्मिन् देशे वसति स देशश्च ज्ञायताम्। वैदेहीं रावणस्य निलयं च ज्ञात्वा तस्मिन् काले त्वया सह प्राप्तकालं विधास्यामि। अहमस्मिन् कार्ये समर्थो नास्मि। लक्ष्मणोऽपि न जानाति। त्वमस्य कार्यस्य समर्थः कारकश्च। विभो! मम कार्यविनिश्चयं त्वमेवाज्ञापय। मम कार्यं त्वमेव जानासि। लक्ष्मणादनन्तरं त्वमेव मे द्वितीयः सुहृत्। त्वं विक्रमी अस्मद्धिते युक्तश्चासि। त्वमर्थकालौ जानासि। एवमुक्तः सुग्रीवो रामस्य लक्ष्मणस्य च सान्निध्ये यूथपं शैलाभं मेघनिर्घोषं बलवन्तं विनतं नाम प्लवगेश्वरमुवाच। वानरोत्तम! देशकालनयैर्युक्तः कार्यविनिश्चये विज्ञस्त्वं सोमसूर्यनिभैः+ वानरैः सार्धं तरस्विनां वानराणां शतसहस्रेण वृतः सशैलवनकाननां पूर्वां दिशमभिगच्छ। तत्र वैदेहीं रावणस्य निलयं च गिरिदुर्गेषु वनेषु नदीषु च मृगयध्वम्। तस्यां दिशि सर्वेषु प्रदेशेषु सीतां रावणनिवासं च विचिनुत*। उदयपर्वतं यावद् गत्वा वैदेह्या वार्तां रावणस्य निलयं च ज्ञात्वा मासे पूर्णे निवर्तध्वम्। मासादूर्ध्वं न वस्तव्यम्। वसन् मम वध्यो भवेत्। सिद्धार्था निवर्तध्वम्। महेन्द्रप्रियां वनषण्डमण्डितां पूर्वां दिशं निपुणं चरित्वा सीतां विदित्वा ततो निवृत्ताः सुखिनो भविष्यथ।

## ४०

पूर्वां दिशं बलं प्रस्थाप्य सुष्ठुलक्षितसामर्थ्यान् वानरान् दक्षिणस्यां दिशि प्रेषयामास। नीलं हनुमन्तं जाम्बवन्तं सुहोत्रं शरारिं शरगुल्मं गजं गवाक्षं गवयं सुषेण** मृषभं मैन्दं द्विविदं विजयं गन्धमादनमुल्कामुखमसङ्गं चाङ्गदप्रमुखान् सन्दिदेश।

---

+ Cr सोमसूर्यात्मजैः। ग्राह्यः – सोमसूर्यनिभैः। * श्लोकाः १८–६० अस्मिन् वाक्ये संक्षिप्ताः। ** अयं सुषेणः तारापितुरन्यः।

महाबलमङ्गदं+ तेषामग्रेसरं कृत्वा दक्षिणां दिशं प्राहिणोत्। तत्रत्यान् सर्वान् देशान् समुदाजहार*। एतत् सर्वमन्यद् यद् दृश्यते तच्च समालोक्य वैदेह्या गतिं विदित्वा संनिवर्तध्वम्। यो मासानन्तरं प्रथममागम्य दृष्टा सीतेति वक्ष्यति स मत्तुल्यविभवो भोगैः सुखं विहरिष्यति। ततः प्रियतरो मे नास्ति। मम प्राणाद् विशेषतः स मे प्रियो भविष्यति। स बहुशः कृतापराधोऽपि मम बन्धुर्भविष्यति। भवन्तः अमितबलपराक्रमा विपुलगुणेषु कुलेषु प्रसूताः। मनुजपतिसुतां देवीं सीतां यथा लभध्वं तदनुरूपं पुरुषप्रयत्नमारभध्वम्।

## ४१

बुद्धिविक्रमसंपन्नान् जवे वायुवेगसमान् वानरान् दक्षिणां दिशं प्रस्थाप्य सुग्रीवस्तारापितरं श्वशुरं भीमविक्रमं सुषेणमाहूय प्रणम्य उपस्थिते रामस्य कृत्ये साहाय्यं कुरु इति प्रार्थयामास। वानराणां शतसहस्रेण वृतः पश्चिमां दिशमभिगच्छ। इति तत्रत्यदेशान् समुदाहृत्योवाच**। रामपत्न्यां दृष्टायां कृतस्य प्रतिकर्मणा कृतकृत्या भविष्यामः। अतोऽन्यदप्यस्य कार्यस्य यद्धितं भवेत् देशकालार्थसंहितं तदपि भवद्भिः संप्रधार्य कार्यम्। सुषेणप्रमुखाः प्लवंगमाः सुग्रीववाक्यं निशम्य तमामन्त्र्य पश्चिमां दिशं जग्मुः।

## ४२

श्वशुरं पश्चिमां दिशं संदिश्य सुग्रीवः शतबलिमुवाच। शतसहस्रेण वानरैः सह त्वमुदीचीं दिशं प्रतिष्ठस्व। तत्र रामपत्नीं विचिनुत। इत्युक्त्वा तत्रत्यान् सर्वान् देशान् वर्णयामास3*। एतत्

---

+Cr महद् बलमसङ्गगम्। ग्राह्यः – महाबलमथाङ्गदम्। * ७–४३ श्लोका अस्मिन् वाक्ये संक्षिप्ताः। ** श्लोकाः ५–४९ वाक्ये संक्षिप्ताः। 3* श्लोकाः ५–५९ वाक्ये संक्षिप्ताः। पूर्वां दिशमारभ्य चतस्रो दिशः प्रदक्षिणक्रमेणोक्ताः।

सर्वं विचेतव्यम्। अनुक्तस्यापि मार्गणे मतिः क्रियताम्। हे अनिलानलोपमा वानराः! ततो विदेहजादर्शनजेन कर्मणा रामस्य महत् प्रियं कृतं स्यात्। ततोऽपि मम महत्तरं प्रियं कृतं भविष्यति। ततः कृतार्थाः सहिताः सबान्धवा मया समर्चिताः शान्तशत्रवः सहप्रियाः समस्तप्राणिनामाश्रयदातार उर्वीं प्रतिचरिष्यथ+।

## ४३

सुग्रीवो विशेषेण हनुमन्तमुवाच। सः अर्थसाधने तस्मिन् हरिश्रेष्ठे निश्चितार्थ आसीत्। वानरश्रेष्ठ! भूमावन्तरिक्षेऽम्बरे स्वर्गे जले वा ते गतेर्निरोधं न पश्यामि। असुरगन्धर्वनाग-नरदेवतानां ससागरधराधराः सर्वे लोकास्ते विदिताः। महाकपे! तव गतिर्वेगस्तेजः कौशल्यं च पितुर्मारुतस्य सदृशानि। तेजसा ते समं भूतं भुवि न विद्यते। तत् सीता यथा लभ्यते तद् विधानं त्वमेवोपपादय। बलं बुद्धिः पराक्रमो देशकालानुवृत्तिर्नयश्च त्वय्येव सन्ति। ततो रामो हनूमति कार्यसाधनसंबन्धमवेक्ष्य तस्य शक्तिं विदित्वा चिन्तयामास। सुग्रीवः सर्वथा कार्यसाधने हनूमति विश्वसिति। हनूमांश्च कार्यसाधने निर्भरमात्मविश्वासवानस्ति। एवं प्रस्थितस्य पूर्वकृतकर्मभिः प्रसिद्धस्यास्य कार्यसाफल्यं ध्रुवम्। एवं विचिन्त्योद्यमश्रेष्ठं हनुमन्तं समीक्ष्य प्रहृष्टमना रामः कृतार्थ इव संवृत्तः। ततः प्रीतो रामः स्वनामाङ्कोपशोभितमङ्गुलीयकं सीताया अभिज्ञानं तस्य दत्त्वोवाच। हरिश्रेष्ठ! अनेन चिह्नेन जनकात्मजा त्वां मत्सकाशादनुप्राप्तमनुद्विग्नानुपश्यति। तवोत्साहः सत्त्वयुक्तो विक्रमः सुग्रीवस्य संदेशश्च मे सिद्धिं कथयन्तीव। हनुमान् तदङ्गुलीयकं गृहीत्वा मूर्ध्नि स्थापयित्वा कृताञ्जलिश्चरणौ

---

+ Cr प्रतिशान्तशत्रवः। प्रति शान्तशत्रवः इति स पाठचः।

वन्दित्वा प्रतस्थे। स हरीणां तन्महद् बलं नयन् गताम्बुदे व्योम्नि नक्षत्रगणोपशोभितः शशीव बभूव। अतिबल! श्रेष्ठसिंहविक्रम! हनुमन्! अहं तव बलमाश्रितः। महापराक्रमेण यथा जनकसुताधिगम्यते तथा कुरुष्व इति रामः पुनस्तमुक्त्वा प्राहिणोत्।

## ४४

भर्तुस्तदुग्रशासनं विज्ञाय वानरश्रेष्ठा मेदिनीं शलभा इव संछाद्य संप्रतस्थिरे। सहलक्ष्मणो रामः सीताधिगमे विहितं तं मासं प्रतीक्षमाणः प्रस्रवणपर्वते न्यवसत्। तदा वीरो वानरः शतबलिर्हिमवत्पर्वतावृतां रम्यामुत्तरां दिशं सहसा प्रतस्थे। पूर्वां दिशं विनतो जगाम। ताराङ्गदादिसहितो हनुमानगस्त्याचरितां दक्षिणां दिशं जगाम। भयंकरां पश्चिमां दिशं सुषेणः प्रतस्थे। एवं राजा सुग्रीवः कपिसेनापतीन् यथातथं सर्वा दिशश्चोदयित्वा मुमुदे। राज्ञैवं संचोदिताः सर्वे वानरपुङ्गवाः स्वां स्वां दिशं त्वरिताः संप्रतस्थिरे। नदन्तो विक्रोशन्तो गर्जन्तः क्ष्वेडन्तो धावन्तश्च ते जग्मुः। सीतामानेष्यामो रावणं हनिष्यामः। अहमेको रावणं रणे हनिष्यामि ततो राक्षसान् पीडयित्वा जनकात्मजामानेष्यामीति कश्चिदुवाच। श्रमेण वेपमानां जानकीं पातालादप्यहमेक एवाहरिष्यामि। भवद्भिः स्थीयतामिति कश्चिदपरः प्राह। अहं वृक्षान् विधमिष्यामि। गिरीन् धरणीं च दारयिष्यामि। सागरं क्षोभयिष्यामि। अहं शतयोजनदूरं प्लवेय। ततोऽप्यधिकमहं प्लवेय। भूतले सागरे शैलेषु वनेषु पातालमध्ये च मम गतिर्न निरुध्यते। एवं बलदर्पिता वानराः सुग्रीवस्य सन्निधावेकैको+ वचनमूचुः।

## ४५

गतेषु वानरेषु रामः सुग्रीवं कथं भवान् सर्वं भूमण्डलं विजानीते इति पप्रच्छ। प्रणतः सुग्रीवः श्रूयतां विस्तरेण सर्वमाख्यामीत्युवाच। वाली महिषाकृतिं दुन्दुभिं* नाम दानवं यदा मलयपर्वतं प्रति पर्यकालयत् तदा दुन्दुभिर्मलयपर्वतगुहां विवेश। वाली च तज्जिघांसया मलयं विवेश। तदा विनीतोऽहं तत्र गुहाद्वारि निक्षिप्तः। संवत्सरे गते वाली न निरक्राम्यत्। तदा बिलं रक्तवेगेन पूर्णमभवत्। तद् दृष्ट्वाहं विस्मितो भ्रातृशोकपीडितोऽभवम्। तदाहं भ्राता हत इति निश्चित्य पर्वतसंकाशां शिलां बिलद्वारि निक्षिप्य निष्क्रमितुमशक्नुवन् महिषो विनशिष्यतीति मत्वा किष्किन्धामागाम्। अहं सुमहद् राज्यं रुमया सह तारां च प्राप्य मित्रैः सह निर्बाधोऽवसम्। ततो वानरर्षभो वाली तं दानवं हत्वा प्रत्याजगाम। अहं भ्रातृगौरवेण भयेन च राज्यमददाम्। दुष्टात्मा प्रव्यथितः स वाली सचिवैः सह धावन्तं मां जिघांसुः क्रोधात् पर्यकालयत्। वालिनानुद्रुतो विविधा नदीः वनानि नगराणि च पश्यन् प्रधावित आसम्। तदा मया सर्वा पृथिवी गोष्पदवल्लङ्घिता आदर्शतलसङ्काशा अलातचक्रप्रतिमा च दृष्टा। पूर्वां दिशं ततो दक्षिणां पुनः पश्चिमां च गत्वा उत्तरां प्रति प्रस्थितोऽभवम्। तदा हनुमान् मामब्रवीत्। राजन्! वाली मतङ्गेन पुरा शप्तः। यद्यस्मिन्नाश्रममण्डले स प्रविशेत् तस्य मूर्धा शतधा भवेत्। तं शापमिदानीं स्मरामि। अतोऽस्मिन्नाश्रममण्डले अस्माकं वासः सुखो निरुद्विग्नश्च भविष्यतीति। राम! तदा वाली

* ९-४ श्लोके मायावी कथितः।

ऋष्यमूकपर्वतं यावदागत्य मतङ्गशापभयात् तत्पर्वतं न विवेश। एवं तदा सर्वं पृथिवीमण्डलं मया प्रत्यक्षं वीक्षितम्। ततो गुहामागत आसम्।

## ४६

सुग्रीवेणाज्ञप्ताः कपिश्रेष्ठा यथोक्तं वैदेहीमन्वेषितुमञ्जसा सर्वतो जग्मुः। ते सरांसि सरितो वनान्याकाशं नगराणि नदीमध्यदुर्गमदेशान् शैलांश्च सुग्रीवसमाख्यातान् सर्वान् प्रदेशान् व्यचिन्वन्। सीताधिगमनकृतनिश्चया दिवसं विचित्य निशाकालेषु मेदिन्यां समागच्छन्ति स्म। ते वानरा अहस्सु भिन्नभिन्नदेशेषु परिभ्रम्य रात्रिषु सर्वकालपुष्पफलवतो वृक्षानासाद्य शेरते स्म। प्रस्थानदिनं प्रथमं कृत्वा मासे कपिश्रेष्ठा निराशाः प्रस्रवणपर्वतं गत्वा सुग्रीवमूचुः। सचिवैः सह विनतो यथोक्तां पूर्वां दिशं विचित्य सीतामदृष्ट्वा आजगाम। शतबलिः सैन्येन सहोत्तरां दिशं विचित्य निवृत्तः। वानरैः सह पश्चिमाशां विचित्य सुषेणो मासे पूर्णे निवृत्य सुग्रीवमुपाजगाम। प्रस्रवणपर्वते रामेण सहोपविष्टं सुग्रीवं समासाद्याभिवाद्येदमब्रुवन्। सर्वे पर्वता वनानि नगराणि नद्यः सागरप्रान्ता जनपदाश्च विचिताः। त्वया परिकीर्तिताः सर्वा गुहा लतावितततसंतता महागुल्माश्च विचिताः। गहनेषु दुर्गेषु विषमेषु देशेषु अतिप्रमाणानि सत्त्वानि विचितानि हतानि च। गहना देशाः पुनः पुनर्विचिताः। महात्मा हनुमान् सीतां द्रक्ष्यति। यां दिशं सा गता तामेव दिशं स आस्थितः।

## ४७

ताराङ्गदाभ्यां सह हनुमान् सुग्रीवोद्दिष्टं देशमुपचक्रमे।

विचिनोति स्म। पर्वताग्रान् नदीदुर्गान् सरांसि विपुलान् द्रुमान् वृक्षषण्डान् वृक्षावृतान् विविधान् पर्वतांश्च ते व्यचिन्वन्। परन्तु ते सीतां न ददृशुः। विविधानि मूलानि फलानि च भक्षयन्तस्ते तामन्विष्यन्तस्तत्र तत्र न्यवसन्। स तु देशो गुहागहनवान् दुरन्वेष आसीत्। तं देशं विसृज्य ते अन्यं देशं विविशुः। तस्मिन् देशे वृक्षाः पर्णपुष्पफलहीनाः सरितो निस्तोया मूलं सुदुर्लभं चाभवन्। तत्र महिषा मृगा गजाः शार्दूलाः पक्षिणः अन्ये वनजन्तवश्च नासन्। तत्र स्निग्धपत्रफुल्लपङ्कजयुताः प्रेक्षणीयाः सुगन्धाः पद्मलता भ्रमराश्च नासन्। सत्यवादी महाभागस्तपस्वी परमामर्षी नियमैर्दुष्प्रधर्षणः कण्डुर्नाम महर्षिर्बभूव। तस्मिन् वने तस्य मुनेर्दशवार्षिकः पुत्रो ममार। तेन स महामुनिः क्रुद्धो बभूव। कृत्स्नं तदरण्यमशरण्यं दुराधर्षं मृगपक्षिविवर्जितं च तेन मुनिना शप्तम्। समाहितास्ते वानरास्तस्य प्रदेशस्य काननभागान् गिरिकन्दराणि नद्युत्पत्तिस्थानानि च व्यचिन्वन्। तत्र च ते सीतां हर्तारं रावणं च नापश्यन्। ते लतागुल्मसमावृतं भीमं तं प्रदेशं प्रविश्य क्रूरकर्माणमसुरं ददृशुर्यः सुरेभ्योऽपि न बिभेति स्म। अपरं शैलमिव स्थितं भयङ्करं तं दृष्ट्वा वानरास्तेन योद्धुं सन्नेहुः। स च वानरान् यूयं नष्टा स्थेत्युक्त्वा संक्रुद्धः संहितं मुष्टिमुद्यम्याभ्यधावत्। सहसापतन्तं तमङ्गदो रावणोऽयमिति मत्वा तलेनाभिजघान। वालिपुत्राभिहतः सोऽसुरो वक्त्रात् शोणितमुद्वमन् पर्यस्तः पर्वत इव भूमौ पपात। तस्मिन् मृते जितकाशिनो वानराः सर्वं तद् गिरिगह्वरं व्यचिन्वन्। काननं पुनर्विचित्यान्यद् घोरं गिरिगह्वरं विविशुः। ते पुनर्विचित्य खिन्ना विनिष्पत्य समागता दीनमानसा एकान्ते वृक्षमूले निषेदुः।

## ४८

अथ परिश्रान्तो महाप्राज्ञोऽङ्गदस्तदा सर्वान् वानरान् समाश्वास्य शनैरिदमुवाच। वनानि गिरयो नद्यो दुर्गाणि गहनानि दर्यो गिरिगुहाश्चास्माभिः समन्ततो विचिताः। जानकी तस्या अपहर्ता वा न दृश्यते। महान् नः कालो यातः। उग्रशासनः सुग्रीवः। तस्मात् सर्वे भवन्तः समन्ततो विचिन्वन्तु। तन्द्रीं शोकं निद्रां च विहाय सीतां यथा द्रक्ष्यामस्तथा विचिनुध्वम्। अनिर्वेदं कौशल्यं मनसः अपराजयं च कार्यसिद्धिकराण्याहुः। तस्मादहमेतद् ब्रवीमि। दुर्गमिदं वनं खेदं त्यक्त्वा पुनर्विचीयताम्। क्रियमाणस्य कर्मणोऽवश्यं फलं दृश्यते। अलं निर्वेदेन। मीलिताक्षैरस्माभिः सम्प्रति न भवितव्यम्। हे वानराः! राजा सुग्रीवः क्रोधनस्तीक्ष्णदण्डश्च। महात्मनो रामस्य सततं भेतव्यम्। युष्माकं हितार्थमेतन्मयोक्तम्। यदि रोचते क्रियताम्। यन्नः सर्वेषां क्षमं तदुच्यताम्। अङ्गदस्य वचः श्रुत्वा गन्धमादनः पिपासाश्रमखिन्नया अव्यक्तया वाचोवाच। अङ्गदः सदृशमुक्तवान्। हितमनुकूलं चास्य भाषितं क्रियताम्। पुनश्च शैलान् कन्दरान् दरीः शून्यानि काननानि गिरिप्रस्रवणानि च मृगयामहे। सुग्रीवेण यथोद्दिष्टानि तथा सर्वाणि गिरिदुर्गाणि सर्वे सर्वशो विचिन्वन्तु। ततस्ते वानराः पुनः समुत्थाय विन्ध्यकाननसङ्कीर्णां दक्षिणां दिशं विचेरुः। सीतादर्शनकाङ्क्षिणस्ते वानराः शारदाभ्रप्रतिमं श्रीमन्तं शृङ्गवन्तं दरीवन्तं रजतपर्वतमधिरुह्य तत्र रम्यं लोध्रवनं सप्तपर्णवनानि च व्यचिन्वन्। तत्पर्वताग्रमधिरूढास्ते श्रान्ता वैदेहीं न ददृशुः। बहुकन्दरं तं पर्वतं परीक्षमाणा अवारोहन्।

मुहूर्तं विश्रम्य समाश्वस्ताः किञ्चिदपगतश्रमाः पुनरुद्यता दक्षिणां दिशमन्वैष्यन्। हनुमत्प्रमुखास्ते वानराः पुनरन्वेषणं प्रारभ्य विन्ध्यमेवाद्यन्तं समन्ततो विचेरुः।

४९

ताराङ्गदाभ्यां सह हनुमान् विन्ध्यस्य गुहा गहनानि च विचिनोति स्म। परितः सिंहशार्दूलजुष्टा गुहाः पर्वतस्य विषमेषु महाप्रस्रवणेषु च व्यचिनोत्। तत्रैव वसतां तेषां स कालो व्यत्यवर्तत। गुहागहनवान् महान् स देशो दुरन्वेषः। हनुमान् तत्र सर्वं पर्वतं विचिनोति स्म। गजो गवाक्षो गवयः शरभो गन्धमादनो मैन्दो द्विविदो हनुमान् जाम्बवान् अङ्गदस्तारश्च पृथक् पृथक् परस्परस्याविदूरतो गिरिसमुदायावृतान् देशान् दक्षिणदिशायां मृगयित्वा क्षुत्पिपासापरीताः श्रान्ताः सलिलार्थिनो लताभिर्वृक्षैश्च व्याकीर्णं महाबिलं ददृशुः। तदा तस्मात् बिलात् क्रौञ्चा हंसाः सारसा जलार्द्राः पद्मरेणुभिः रक्ताङ्गाश्चक्रवाकाश्च निश्चक्रमुः। तदा ते सुगन्धि दुरतिक्रमं तद् विलमासाद्य विस्मयव्यग्रमनसो बभूवुः। बिलं दृष्ट्वा प्रथमं ते शशङ्किरे। पश्चात् संहृष्टास्तद् बिलमभ्यपद्यन्त। ततो हनुमान् वानरानुवाच। दक्षिणदिशायां गिरिजालावृतान् देशान् मृगयित्वा वयं सर्वे परिश्रान्ताः। न च मैथिलीं पश्यामः। अस्माद् बिलात् हंसाः सारसाः क्रौञ्चा जलार्द्राश्चक्रवाकाश्च सर्वशो निष्पतन्ति। अत्र सलिलवान् कूपो वा ह्रदो वा नूनमस्ति। तथा 'बिलद्वारे इमे पादपाः स्निग्धास्तिष्ठन्ति' इत्युक्ताः सर्वे वानरास्तिमिरावृतं तद् बिलं प्रविश्य चन्द्रसूर्यरहितं रोमहर्षणं तदन्तर्ददृशुः। नानापादपसंकुले दुर्गमे तस्मिन् बिले अन्योन्यं संपरिष्वज्य

योजनमन्तरं जग्मुः। नष्टसंज्ञास्तृषिताः सम्भ्रान्ताः सलिलार्थिनस्ते त्वरमाणा एव बिले कञ्चित् कालं पुरतो जग्मुः। कृशा दीनाः परिश्रान्तास्ते यदा जीविते निराशा बभूवुस्तदा प्रकाशं ददृशुः। ततस्ते तं देशमागम्य सुन्दरं वितिमिरं वनं ददृशुः। तत्र दीप्तवैश्वानरप्रभाः काञ्चना वृक्षाः सालास्तालाः पुन्नागाः ककुभा वञ्जुला धवाः चम्पका नागाः पुष्पिताः कर्णिकाराश्च बभूवुः। तेषां वृक्षाणां बालसूर्यसंकाशा वैदुर्यमयवेदिका बभूवुः। पक्षिसंकुला नीलवैदूर्यवर्णाः पद्मलतास्तत्रासन्। ता बालार्कसन्निभैः काञ्चनैर्वृक्षैर्वृताः+। तत्र महद्भिः स्वर्णमत्स्यैः स्वर्णकच्छपैश्च युताः प्रसन्नसलिलाः पद्मपुष्करिण्य आसन्। तत्र च हरयः काञ्चनानि राजतानि तपनीयगवाक्षाणि मुक्ताजालावृतानि हैमराजतभूमिकानि, वैदूर्यमणिमन्ति महाभवनानि ददृशुः। पुष्पफलयुतान् प्रवालमणिसन्निभान् वृक्षान् काञ्चनभ्रमरान् मधूनि च समन्ततस्ते ददृशुः। मणिकाञ्चनालङ्कृतानि शयनान्यासनानि महार्हाणि यानानि च ते ददृशुः। हैमराजतकांस्यानां भाजनानां संचयान् अगरूणां श्रेष्ठचन्दनानां संचयान् शुचीनि अभ्यवहार्याणि मूलानि फलानि महार्हाणि पानानि रसवन्ति मधूनि महार्होत्तमाम्बराणां संचयान् रम्याणां कम्बलानामजिनानां च संचयांश्च वानरा ददृशुः। समीपे ते कांचन स्त्रियं च ददृशुः। चीरकृष्णाजिनाम्बरां नियताहारां तेजसा ज्वलन्तीमिव दृश्यमानां तां तापसीं दृष्ट्वा ते भृशं संत्रेसुः। तदा हनुमान् तां वृद्धामभिवाद्य का त्वमिदं भवनं बिलमिमानि रत्नानि च कस्य? वदेति कृताञ्जलिः पप्रच्छ।

---

+ Cr काञ्चनैर्वृक्षैर्वृतम्। ग्राह्यः – काञ्चनैर्वृक्षैर्वृता।

## ५०

इत्युक्त्वा हनुमान् तां तापसीं पुनरब्रवीत्। क्षुत्पिपासापरिश्रान्ताः सर्वशः परिखिन्नाश्च वयं तिमिरसंवृतमिदं बिलं सहसा प्रविष्टाः स्मः। अत्रेमान्यद्भुतानि वस्तूनि दृष्ट्वा वयं सम्भ्रान्ताः। सर्वमिदं कस्य?* तव प्रभावं यस्य तपोबलादिदं सर्वं निष्पन्नं तस्य नामधेयं चाजानतां नः सर्वमाख्यातुमर्हसि। एवं हनुमता पृष्टा सर्वभूतहिते रता सा तापसी प्रत्युवाच। महातेजा मायावी मयो नाम दानवर्षभ आसीत्। स पुरा दानवप्रभूणां विश्वकर्मा बभूव। तेनेदं मायया काञ्चनं वनं काञ्चनं दिव्यं भवनं च निर्मितम्। स वर्षसहस्राण्यरण्ये महत् तपस्तप्त्वा पितामहात् सर्वं शुक्राचार्यस्य धनं वरं लेभे। बलवान् सर्वकामसमर्थः स सुखितोऽस्मिन् महावने कंचित्कालमुवास। हेमायामप्सरसि सक्तं तं मयं शक्रो विक्रम्याशनिं प्रयुज्य जघान। इदमुत्तमं वनं शाश्वतः कामभोगश्च हिरण्मयमिदं गृहं च ब्रह्मणा हेमायै दत्तम्।मेरुसावर्णेर्दुहिताहं स्वयंप्रभास्मि। हेमाया भवनमिदमहं रक्षामि। नृत्तगीतविशारदा हेमा मम प्रियसखी। तया दत्तवरास्मि। इदमुत्तमं भवनं रक्षामि। युष्माकं किं कार्यम्? कस्य हेतोः कान्ताराणि प्रपद्यध्वे? दुर्गमिदं वनं युष्माभिः कथं लक्षितम्? इमानि खाद्यानि मूलानि फलानि च भुक्त्वा पानीयं पीत्वा सर्वं मे वक्त।

## ५१

अथ विश्रान्तान् वानरान् तापस्यब्रवीत्। फलभक्षणाद् यदि वः खेदः प्रणष्टो यदि च मया श्रोतव्यं तर्हि कथ्यताम्। तदा हनुमान् यथातत्त्वमाख्यातुमुपचक्रमे। सर्वस्य लोकस्य राजा

* श्लोकाः ४-७ वाक्ये संक्षिप्ताः।

महेन्द्रवरुणोपमो दशरथपुत्रः श्रीमान् रामो भ्रात्रा लक्ष्मणेन भार्यया वैदेह्या च सह दण्डकारण्यं प्रविष्टः। तस्य भार्या रावणेन जनस्थानाद् बलात् हृता। वीरो वानरमुख्यानां राजा सुग्रीवो नाम वानरो रामस्य सखास्ति। तेन वयं प्रस्थापिताः। अङ्गदप्रमुखा वयं सर्वे सीतया सह रावणं मृगयितुं दक्षिणामाशां चोदिताः। समग्रां दक्षिणां दिशं विचित्य सर्वे वयं बुभुक्षिताः परिश्रान्ता वृक्षमूले निषण्णाः स्मः। सर्वे वयं विवर्णवदना ध्यानपरायणाश्चिन्तामहार्णवे मग्नाः पारं नाधिगच्छामः। सर्वतः पश्यन्तो लतापादपसंछन्नं तिमिरेण समावृतं महद् बिलमपश्याम। अस्माद् बिलात् सलिलकणयुतैः पक्षैर्जलक्लिन्ना हंसाः कुरराः सारसाश्च पक्षिणो निष्पतन्ति स्म। साध्वत्र प्रविशामेति मया वानरा उक्ताः। ते चैवमेवानुमीय भर्तृकार्यत्वरया प्रविशामेत्यूचुः। ततः परस्परं हस्तौ गृहीत्वा सहसा बिलं प्रविष्टाः परिद्यूना बुभुक्षितास्त्वामुपागताः स्मः। बुभुक्षापरिपीडितैरस्माभिरातिथ्यधर्मदत्तानि मूलानि फलानि चोपभुक्तानि। बुभुक्षया म्रियमाणाः सर्वे वयं त्वया रक्षिताः। तस्माद् वानरास्ते प्रत्युपकारं किं कुर्वन्तु? ब्रूहि। एवमुक्ता स्वयंप्रभा तान् प्रत्युवाच। तरस्विनां सर्वेषां वानराणां परितुष्टास्मि। धर्ममाचरन्त्या ममेह केनचित् कार्यं नास्ति।

## ५२

एवं तापस्या धर्मसंहितं शुभं वाक्यमुक्तो हनुमान् श्लाघ्यकर्माणं तामुवाच। हे धर्मचारिणि! त्वां सर्वे वयं शरणं प्रपन्नाः स्मः। महात्मना सुग्रीवेणास्माकं निर्दिष्टः कालो बिले परिवर्तमानानां व्यतिक्रान्तः। तस्मात्त्वं सुग्रीववचनातिक्रान्तान् गतायुषोऽस्मानस्माद् बिलादुत्तारयितुमर्हसि। धर्मचारिणि! सुग्रीवभयशङ्किता–

नस्मान् त्रातुमर्हसि। अस्माभिर्महत् कार्यं कर्तव्यम्। इह वासिभिरस्माभिस्तत् कार्यं न कृतम्। हनुमतैवमुक्ता तापसी प्राह। प्रविष्टेन जीवता निवर्तितुं दुष्करम्। नियमोपार्जितेन तपसः प्रभावेण सर्वान् वानरान् बिलादुद्धरिष्यामि। सर्वे यूयं चक्षूंषि निमीलयत। अनिमीलितलोचनैर्निष्क्रमितुमशक्यम्। ततो गमनकाङ्क्षया हृष्टाः सर्वे वानरा लोचने निमील्य कराङ्गुलिभिः पिदधुः। तदा हस्तरुद्धमुखा वानरास्तया निमेषान्तरमात्रेण बिलादुत्तारिताः। निःसृतान् तान् समाश्वास्य तापसी प्राह। एष श्रीमान् नानाद्रुमलतायुतो विन्ध्यो गिरिः। एष प्रस्रवणः शैलः। अयं सागरो महोदधिः*। भवतां स्वस्त्यस्तु। भवनं गमिष्यामि। इत्युक्त्वा स्वयंप्रभा श्रीमत् तद् बिलं प्रविवेश। ततस्ते घोरं वरुणालयमपारमभिगर्जन्तं घोरैरूर्मिभिराकुलं सागरं ददृशुः। मयस्य मायाविहितं गिरिदुर्गं विचिन्वतां तेषां सुग्रीवनिर्दिष्टः कालो मासो व्यतिक्रान्तः। तदा महाभागा वानराः संप्रपुष्पितपादपे विन्ध्यस्य गिरेः पादे उपविश्य चिन्तामापेदिरे। पुष्पातिभाराग्रान् बहुलतासमावृतान् वसन्तकालफलशालिनो द्रुमान् दृष्ट्वा ते भयशङ्किता बभूवुः। वसन्तमासाद्यमानं** ते परस्परं प्रतिवेद्य कालातिपातान्नष्टप्रयोजना धरणीतले निपेतुः। ततो युवराजोऽङ्गदो महद् वाक्यमुवाच+। वयं सर्वे कपिराजस्य शासनाद् विनिर्गताः

---

* द्रष्टव्यो मम निबन्धो रामायणसमालोचनम्। साहितीजगती (१९९०)।

** ये चूतादयो वसन्ते फलन्ति ते शिशिरे पुष्प्यन्ति। शरत्कालान्ते मार्गशीर्षे मासि सेनां सन्निधाप्य पौषमासमवधिं कृत्वा सुग्रीवः प्रस्थापितवान्। स पौषो माघश्चातीतः। फाल्गुन एव प्रवृत्तः। तेन वसन्तः प्रत्यासन्न एव न प्राप्त इति गोविन्दराजः। +Cr महाप्राज्ञ अङ्गदो। ग्राह्यः महद् वाक्यमङ्गदो।

स्मः। बिलस्थानामस्माकं मासः पूर्णः। किमिदं न बुध्यते? सुग्रीवेण स्वयं कृते तस्मिन् कालेऽतीते सर्वेषां वानराणां प्रायोपवेशनं युक्तम्। सुग्रीवः प्रकृत्या तीक्ष्णः। स स्वामिभावे व्यवस्थितः। अपराधकृतः प्रत्यागतानस्मान् न क्षमिष्यते। सीताया वार्तामप्राप्य स पापमेव करिष्यति। तस्मादिह पुत्रदारधनगृहसङ्गं त्यक्त्वा प्रायोपवेशनमेव नः क्षमम्। इतः प्रतिनिवृत्तान् सर्वानस्मान् यावद् राजा न घातयेत् तावदिहैव नो मृत्युः श्रेयान्। अहं सुग्रीवेण यौवराज्ये नाभिषेचितः। युक्तकार्यकृता रामेणाभिषेचितोऽस्मि। पूर्वं बद्धवैरः स राजा व्यतिक्रमं दृष्ट्वा कृतनिश्चयो मां तीक्ष्णेन दण्डेन घातयिष्यति। जीवितमध्ये मम कष्टं सुहृदः किं पश्यन्तु? इहैव पुण्ये सागररोधसि प्रायमासिष्ये। युवराजेनाङ्गदेन भाषितमेतच्छ्रुत्वा सर्वे वानरश्रेष्ठाः करुणमूचुः। सुग्रीवः प्रकृत्या तीक्ष्णः। राघवः प्रियभार्यासक्तः। वैदेहीमदृष्ट्वा समागतानस्मान् प्रेक्ष्य राघवस्य प्रियं कर्तुं निस्संशयमस्मान् सुग्रीवो घातयिष्यति। अपराद्धानां स्वामिसन्निधौ गमनं न क्षमम्। भयार्दितानां प्लवङ्गमानामिदं वचः श्रुत्वा तार उवाच। विषादेनालम्। यदि वो रोचते बिलं प्रविश्य वसाम। इदं बिलं मायाविहितं सुदुर्गमं प्रभूतवृक्षोदकभोज्यपेयं चास्ति। पुरन्दरात् रामात् सुग्रीवाद् वा नो भयमिह नास्ति। अङ्गदस्य वचः श्रुत्वा सर्वे हरयः प्रतीता अनुकूलमूचुः। यथा न हन्येमहि तथास्माकमद्यैव विधानं क्षिप्रं विधीयतामिति बभाषिरे।

## ५३

तारे तथा ब्रुवति अङ्गदेन सुग्रीवात् कपिराज्यं हरिष्यते इति हनुमान् मेने। स वालिपुत्रमष्टाङ्गबुद्धियुक्तं चतुर्बलसमन्वितं

चतुर्दशगुणसम्पन्नं च मेने*। शश्वत्तेजोबलपराक्रमैरापूर्यमाणं शुक्लपक्षादौ शशिनमिव श्रिया वर्धमानं बुद्ध्या बृहस्पतिसमं विक्रमे पितुः सदृशं गुरोः+ पुरन्दरमिव तारस्य वचनं शुश्रूषमाणं भर्तुः कार्ये परिश्रान्तमङ्गदं सर्वशास्त्रविशारदो++ हनुमान् ततः कार्ये अनुकूलयितुमारेभे। स चतुर्णामुपायानां तृतीयमवलम्ब्य तान् वानरान् वाक्यसंपदा भेदयामास। तेषु सर्वेषु भिन्नेषु ततः कोपोपायसमन्वितैर्भीषणैर्विविधैर्वाक्यैरङ्गदमभीषयत। तारापुत्र! त्वं युद्धे पितुः समर्थतरोऽसि। ध्रुवम्। पितृवत् कपिराज्यं दृढं धारयितुं शक्तोऽसि। कपयो नित्यमस्थिरचित्ता हि। पुत्रदारान् विना तवाज्ञां न विसहेरन्। अहं ते प्रत्यक्षं प्रवदामि। जाम्बवान् नीलः सुहोत्रश्चैते त्वां नानुवर्तेरन्। अहं त्वां नानुवर्तेय। इमे सर्वे वयं सामदानादिभिर्गुणैर्दण्डेन च त्वया सुग्रीवादपकर्षितुं न शक्याः स्मः। बलवान् दुर्बलेन बिगृह्य तिष्ठेत्। दुर्बलस्तु बलीयसा बिगृह्य न स्थातुं शक्नुयादत आत्मरक्षापरो दुर्बलो बलीयसा न विगृह्णीत। एतद् बिलं त्वां रक्षिष्यतीति चिन्तयसि**। एतस्य विदारणं लक्ष्मणबाणानामीषत्कार्यम्। पुराशनिं क्षिपतेन्द्रेण स्वल्पं कृतम्। लक्ष्मणो निशितैर्बाणैः पत्रपुटवद् गुहां

---

* अत्र महेश्वरतीर्थः। अष्टाङ्गया अष्टगुणया। ते च गुणाः। शुश्रुषा श्रवणं चैव ग्रहणं धारणं तथा ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणा इति। चतुर्बलसमन्वितं बाहुबलमनोबलोपायबलबन्धुबलसमन्वितं यद्वा चतुर्विधबलानि सामादयश्चतुरुपायाः। चतुर्दशगुणास्तु।। श्लो।। देशकालज्ञता दार्ढ्यं सर्वक्लेशसहिष्णुता सर्वविज्ञानिता दाक्ष्यमूर्जस्संवृतमन्त्रता अविसंवादिता शौर्यं शक्तिज्ञत्वं कृतज्ञता शरणागतवात्सल्यममर्षित्वमचा-पलमित्युक्तचतुर्दशगुणयुक्तम्। + Cr शक्रस्येव। ग्राह्यः – गुरोरिव। ++ Cr विशारदम्। ग्राह्यः – विशारदः। ** श्लोकः १३ अस्पष्टार्थः।

भिन्द्यात्। अशनितुल्या नाराचा लक्ष्मणस्य बहवः सन्ति। यदैव त्वं बिले तिष्ठसि तदैव त्वां सर्वे वानराः कृतनिश्चयास्त्यक्ष्यन्ति। पुत्रदाराणां स्मरन्तो नित्योद्विग्नाः शय्यासु निद्रामलभमानास्त्वां निराकरिष्यन्ति। स त्वं सुहृद्भिर्हितकामैर्बन्धुभिश्च हीनः स्पन्दमानात् तृणादपि भृशोद्विग्नो भविष्यसि। लक्ष्मणस्य बाणा महावेगा दुरासदा घोराश्च सन्ति। अपवृत्तं त्वां जिघांसन्तस्ते त्वामवश्यं हिंस्युः। अस्माभिः सार्धं गतं विनीतवदुपस्थितं त्वां सुग्रीवो राज्ये आनुपूर्व्यात् स्थापयिष्यति। तव पितृव्यो धर्मकामः प्रीतिकामो दृढव्रतः शुचिः सत्यप्रतिज्ञश्चास्ति। स त्वां जातु न जिघांसति। स ते मातुः प्रियकामः। तस्य जीवितं तदर्थमस्ति। तस्यान्यदपत्यं नास्ति। अङ्गद! तस्मात्तत्र गम्यताम्।

## ५४

हनुमतः प्रश्रितं धर्मसंहितं स्वामिगौरवसंयुक्तं वाक्यं श्रुत्वा अङ्गद उवाच। स्थैर्यं पूर्णं शौचमक्रौर्यमार्जवं विक्रमो धैर्यं चैतेषु गुणेष्वेकोऽपि सुग्रीवे नोपपद्यते। जीवतो ज्येष्ठस्य प्रियां भार्यां महिषीं धर्मतः स्वस्य मातरं जुगुप्सितो यः स्वीकृतवान्, बहिर्निर्गच्छता शत्रुणा योद्धुं यो द्वारि नियुक्तो बिलस्य मुखं शिलया पिहितवान् स सुग्रीवः कथं धर्मं जानीते? शपथेन गृहीतपाणिः कृतकर्मा राघवो येन विस्मृतः स कस्य सुकृतं स्मरेत्? लक्ष्मणस्य भयेन न त्वधर्मभयभीरुणा सीतां मृगयितुं वयमादिष्टाः। तस्मिन् धर्मः कथं भवेत्? पापे कृतघ्ने स्मृतिहीने चलात्मनि तस्मिन् जातु आर्यः को विश्वस्यात्? विशेषत[+]स्तस्यैव कुले जातः को विश्वस्यात्? सगुणो निर्गुणोऽपि वा राज्ये स्वपुत्रः[*] प्रतिष्ठाप्यः[++]। शत्रुकुलीनं मां सुग्रीवः कथं जीवयिष्यति?

---

+ Cr जिजीविषुः। ग्राह्यः – विशेषतः। * जनिष्यमाणः स्वपुत्रः (सुग्रीवस्य पुत्रः) इति गोविन्दराजः। ++ Cr पुत्रं प्रतिष्ठाप्य। ग्राह्यः पुत्रः प्रतिष्ठाप्यः।

भिन्नमन्त्रः अपराद्धो भिन्नशक्तिरहं किष्किन्धां प्राप्य दुर्बलः अनाथ इव कथं जीवेयम्? शठो नृशंसः सुग्रीवो राज्यकारणान्मामुपांशुदण्डेन बन्धनेन वोपपादयेत्। बन्धनाद् दुःखाच्च प्रायोपवेशनमेव मे श्रेयः। ममानुमतिं दत्त्वा सर्वे वानरा गृहं गच्छन्तु। अहं पुरीं न गमिष्यामि। एवं वः प्रतिजानामि। इहैव प्रायमासिष्ये। मरणमेव मे श्रेयः। वानरेश्वरो मे यवीयान् तातो राजा सुग्रीवः अभिवादनपूर्वं कुशलं वाच्यः। मम माता रुमा आरोग्यपूर्वं कुशलं वाच्या। मम मातरं तारामाश्वासयत। प्रकृत्या सानुक्रोशा प्रियपुत्रा तपस्विनी मे माता मामिह विनष्टं श्रुत्वा व्यक्तं जीवितं हास्यति। एतावदुक्त्वा वृद्धानभिवाद्य रुदन्नङ्गदो भूमौ दर्भेषु संविवेश। तस्मिंस्तत्र संविशति वानरर्षभा रुदन्तो नयनेभ्य उष्णं वारि प्रमुमुचुः। सुग्रीवं निन्दन्तो वालिनं प्रशंसन्तश्चाङ्गदं परिवार्य सर्वे प्रायमासितुं व्यवास्यन्। वालिपुत्रस्यं तन्मतं विज्ञाय वानरश्रेष्ठाः सर्वे उदकमुपस्पृश्य सागरस्योत्तरतीरे दक्षिणाग्रेषु दर्भेषु प्राङ्मुखाः समुपाविशन्। संविशद्भिर्बहुभिर्महाद्रिकूटप्रतिमैर्वानरैर्भृशं सन्नादितनिर्झरान्तरः स पर्वतो नदद्भिर्जलदैरम्बरमिव बभूव।

## ५५

सर्वे ते वानरा यस्मिन् गिरिस्थले प्रायमुपविष्टास्तं देशं सम्पातिर्नाम जटायुषो भ्राता प्रख्यातबलपौरुषश्चिरजीवी विहङ्गमः समुपचक्रमे। स महागिरेर्विन्ध्यस्य कन्दरादभिनिष्क्रम्य उपविष्टान् प्लवगान् दृष्ट्वा हृष्टोऽब्रवीत्। लोके विधिः योगक्षेमसंपादनेन प्राणिनमनुवर्तते। चिरान्मह्यं विहितोऽयमाहार उपागतः। वानराणां परम्पराणां यो यो म्रियते तं तं भक्षयिष्यामि। तान् प्लवंगमान्

निरीक्ष्य पक्षी एवमुवाच। भक्ष्यलुब्धस्य तस्य पक्षिणस्तद् वचनं श्रुत्वा परमदुःखितोऽङ्गदो हनुमन्तमब्रवीत्। सीताकारणेन साक्षाद् यमो वानराणां विपत्तये इमं देशमनुप्राप्तः पश्य। रामस्य कार्यं न कृतम्। राज्ञो वचो न कृतम्। वानराणामियमज्ञाता विपत्तिः सहसागता। वैदेह्याः प्रियकामेन गृध्रराजेन जटायुषा तत्र कृतं महत् कर्म पूर्णतया वः श्रुतम्। तथा तिर्यग्योनिगतान्यपि सर्वाणि भूतानि प्राणांस्त्यक्त्वा वयं यथा तथा रामस्य प्रियं कुर्वन्ति। वयं राघवार्थे परिश्रान्ताः सन्त्यक्तजीविताः कान्ताराणि प्रपन्नाः स्मः। मैथिलीं न च पश्यामः। रणे रावणेन हतः स गृध्रराजः परमां गतिं गतः सुखी वर्तते। तस्य सुग्रीवाद् भयं न विद्यते। जटायुषो विनाशेन राज्ञो दशरथस्य मरणेन वैदेह्या हरणेन च वानराः संशयं गताः। सीतया सहारण्ये रामलक्ष्मणयोर्वासो राघवस्य बाणेन वालिनो वधो रामकोपात् सर्वराक्षसानां वधश्च सर्वमिदं विकृतं कैकेय्या वरदानेन कृतम्। अङ्गदमुखोद्गतं तद् वाक्यं श्रुत्वा तीक्ष्णतुण्डो महास्वनो गृध्रोऽब्रवीत्। मम प्राणैः प्रियतरस्य भ्रातुर्जटायुषो वधं मे मनः कम्पयन्निव कोऽयं गिरा घोषयति? जनस्थाने राक्षसगृध्रयोर्युद्धं किमर्थं कथमासीत्? भ्रातुर्नामधेयं मयाद्य चिरस्य श्रुतम्। श्लाघनीयविक्रमस्य गुणज्ञस्य यवीयसो भ्रातुर्मरणविधिं श्रोतुमिच्छामि। जनस्थाननिवासिनो मम भ्रातुर्जटायुषो दशरथः कथं मित्रमभवद् यस्य ज्येष्ठः प्रियः पुत्रो रामो गुरुजनप्रियोऽस्ति। सूर्यांशुदग्धपक्षत्वाद् प्रचलितुं न शक्नोमि। हे वानराः! तस्मात् पर्वतादवतारयितुमिच्छेयम्।

## ५६

शोकाद् भ्रष्टस्वरमपि तद् वाक्यं श्रुत्वा वानरास्तस्य कर्मणा शङ्किता नैव श्रद्दधुः। प्रायोपविष्टास्ते गृध्रः सर्वान् नो भक्षयिष्यतीति रौद्रां मतिं चक्रुः। प्रायमासीनान् नो यदि गृध्रो

भक्षयिष्यति तर्हि क्षिप्रं कार्यसिद्धिं गताः सर्वथा कृतकृत्या भविष्यामः। पुनरेवं वानरनायका व्यचिन्तयन्। गृध्रं गिरिशृङ्गादवतार्याङ्गद आह। पक्षिन्! प्रतापवान् वानरेन्द्रो मम पितामह ऋक्षरजा+ नाम पार्थिवो बभूव। बहुपुरुषसमबलौ धार्मिकौ सुग्रीवो वाली च तस्यात्मजौ। मम पिता वाली लोके विश्रुतकर्मा राजाभवत्। इक्ष्वाकूणां महारथः कृत्स्नस्य जगतो राजा दाशरथी रामः पितुर्निदेशनिरतो धर्म्यं पन्थानमाश्रितो भ्रात्रा लक्ष्मणेन भार्यया वैदेह्या च सह दण्डकावनं प्रविष्टः। रामस्य भार्या जनस्थानाद् रावणेन बलाद् हृता। रामस्य पितुर्मित्रं जटायुर्नाम गृध्रराट् विहायसा ह्रियमाणां वैदेहीं ददर्श। रावणं विरथं कृत्वा मैथिलीं स्थापयित्वा च परिश्रान्तो वृद्धो जटायू रणे रावणेन हतः। एवं जटायुर्बलीयसा रावणेन हतो रामेण संस्कृतश्चोत्तमां गतिं जगाम। ततो राघवो मम पितृव्येण महात्मना सुग्रीवेण सख्यं चकार मम पितरं चावधीत्। सुग्रीवः सचिवैः सह मम पित्रा विरुद्धः। रामो वालिनं निहत्य ततः सुग्रीवमभ्यषेचयत्। तेन वानरराजेन वयं प्रस्थापिताः। एवं रामप्रयुक्ता वयं ततस्ततो वैदेहीं मृगयमाणा रात्रौ सूर्यप्रभामिव तां नाधिगच्छामः। ते वयं सुसमाहिता दण्डकारण्यं विचित्याज्ञानाद् धरण्यां विवृतं बिलं प्रविष्टाः स्मः। मयस्य मायाविहितं तद् बिलं विचिन्वतां राज्ञा नः कृतः समयो मासस्तत्र व्यतीतः। सुग्रीवाज्ञाबद्धा वयं सर्वे नियममतिक्रान्ता भयात् प्रायमुपास्महे। रामस्य लक्ष्मणस्य सुग्रीवस्य च कोपमुत्पाद्य तत्र गतानां नः सर्वेषां जीवितं नास्ति।

५७

प्राणान् मुमुक्षुभिर्वानरैरिति करुणं वाक्यमुक्तो गृध्रः सबाष्पस्तान् प्रत्युवाच। हे वानराः। बलीयसा रावणेन युद्धे

---

+ Cr ऋक्षरजो। ग्राह्यः– ऋक्षरजा।

हत इति भवद्भिराख्यातो जटायुर्मम यवीयान् भ्राता। तत् श्रुत्वापि वृद्धभावादपक्षत्वात् सम्प्रति मे भ्रातुर्वैरप्रतीकारे शक्तिर्नास्ति। पुरा वृत्रवधे वृत्ते स चाहं च जयैषिणौ ज्वलन्तं रश्मिसमूहं सूर्यमुपयातौ। आकाशमार्गेण महाजवेनावामगच्छाव। सूर्ये गगनमध्यं प्राप्ते जटायुरवासीदत्। तं भ्रातरं सूर्यरश्मिभिरर्दितं दृष्ट्वा परमविह्वलं तमहं प्रेम्णा पक्षाभ्यामाच्छादयम्। अहं निर्दग्धपक्षो विन्ध्ये पतितः। इह वसन्नहं भ्रातुः प्रवृत्तिं न जाने। जटायुषो भ्रात्रा सम्पातिनैवमुक्तोऽङ्गदः प्रत्युवाच। यदि त्वं जटायुषो भ्राता भवसि तर्हि रक्षसो निलयमाख्याहि यदि जानासि। अदीर्घदर्शिनं तं राक्षसाधमं रावणमन्तिके वा दूरे वा निवसन्तं यदि जानासि तर्हि नः शंस। तदा सम्पातिर्वानरान् संप्रहर्षयन् स्वोचितं वचनमब्रवीत्। अहं निर्दग्धपक्षो गतवीर्यो गृध्रः। वाङ्मात्रेणापि रामस्योत्तमं साह्यं करिष्ये। अतलवितलादिलोकान् विष्णोस्त्रैविक्रमाक्रान्तान् लोकान् देवासुरविमर्दानमृतमथनं चाहं जानामि। जरया मम तेजो हृतं प्राणाश्च शिथिलाः। प्रथमं रामकार्यं मया कर्तव्यम्। दुरात्मना रावणेन ह्रियमाणा तरुणी रूपसम्पन्ना सर्वाभरणभूषिता राम रामेति लक्ष्मणेति क्रोशन्ती भूषणान्यपविध्यन्ती गात्राणि विधुन्वती भामिनी मया दृष्टा। असिते राक्षसे तस्या उत्तमं कौशेयं शैलाग्रे सूर्यप्रभेवाम्बरे विद्युदिव बभौ। रामनामपरिकीर्तनात्तामहं सीतां मन्ये। तस्य रक्षसो निलयं कथयामि। शृणुत। विश्रवसः पुत्रः साक्षात् कुबेरस्य भ्राता स रावणो नाम राक्षसो लङ्कां नगरीमध्यास्ते। इतः सम्पूर्णे शतयोजने दूरे द्वीपे रम्या लङ्कापुरी विश्वकर्मणा निर्मिता। दीना कौशेयवासिनी वैदेही लङ्कायां रावणान्तःपुरे रुद्धा

राक्षसीभिः सुरक्षिता वसति। लङ्कायां तां द्रक्ष्यथ। शतयोजनं दूरं सम्प्राप्य दक्षिणं तीरमासाद्य ततः समन्ततः सागरेण गुप्तायां लङ्कायां रावणं द्रक्ष्यथ। क्षिप्रं तत्रैव गत्वा विक्रमध्वम्। ज्ञानेनाहं पश्यामि। सीतां दृष्ट्वा प्रत्यागमिष्यथ। कुलिङ्गपक्षिणामन्येषां धान्यजीविनां पक्षिणां च भूनिकटाकाशे ऽयनमार्गो भवति। काकानां वृक्षफलाशनानां पक्षिणां च द्वितीयो मार्गः। भासाः कुरराः क्रौञ्चाश्च तृतीयमार्गे गच्छन्ति। श्येनाश्चतुर्थं गच्छन्ति। गृध्राः पञ्चमं गच्छन्ति। बलवीर्योपपन्नानां रूपयौवनशालिनां हंसानां षष्ठः पन्थाः। तस्मात् परा वैनतेयगतिः। सर्वेषां नो जन्म वैनतेयाद् बभूव। राक्षसेन+ रावणेन निन्द्यं कर्म कृतम्। तस्य मम भ्रातृघातस्य प्रतिक्रिया मया कर्तव्या++। इहस्थोऽहं रावणं जानकीं च प्रपश्यामि। अस्माकमपि सुपर्णवद्3+ दिव्यं चक्षुर्बलं च स्तः। तस्मादाहारबलेन स्वभावेन च योजनशतात् ततोऽधिकदूराच्च नित्यशः पश्यामः। अस्माकमाहारो निसर्गेण दूरतो विहितः। कुक्कुटानां पादमूले विहितः। समुद्रस्य लङ्घने कश्चिदुपायो दृश्यताम्। वैदेहीमभिगम्य समृद्धार्था गमिष्यथ। भवद्भिः समुद्रं नेतुमिच्छामि। स्वर्गतस्य महात्मनो भ्रातुरुदकं प्रदास्यामि। ततो वानराः सम्पातिं समुद्रतीरं नीत्वा पुनस्तं देशमानीय तस्थुः। सीतायाः प्रवृत्तिमुपलभ्य जहृषुः।

## ५८

इत्थं गृध्रराजेन भाषितममृतवत् स्वादु तद् वचो निशम्य वानरश्रेष्ठा मोदादहृष्यन्4+। सर्वैर्वानरैः सह जाम्बवान् सहसा

---

+ Cr पिशिताशनाः। ग्राह्यः-पिशिताशिनः। ++ ग्राह्या-प्रतिकार्यं च मे तस्य वैरं भ्रातृकृतं भवेत्। 3+ Cr सौवर्णम्। ग्राह्यः सौपर्णम्। 4+ Cr वदतो। ग्राह्यः मुदिता।

ालादुत्थाय सम्पातिमब्रवीत्। सीता क्वास्ति? केन वा दृष्टा? थलीं कोऽहरत्? भवान् तत् सर्वमाख्यातु। वनौकसां गतिर्भव। वेगनिपातिनां रामबाणानां लक्ष्मणबाणानां च विक्रमं को न न्तयति? तच्छ्रुत्वा प्रीतः सम्पातिः प्रीत्या युज्यमानान् ाश्रुतिसमाहितान् वानरानाश्वासयन्पुनरिदमब्रवीत्। वैदेह्या हरणं यथा श्रुतं येन च ममाख्यातं सीता यत्र चास्ति तत् ं श्रूयताम्। बहुयोजनायते दुर्गेऽस्मिन् गिरौ चिरान्निपतितोऽहं ः क्षीणप्राणपराक्रमोऽभवम्। तदवस्थं मां पक्षीश्वरः सुपार्श्वो मे पुत्रो यथाकालमाहारेण बिभर्ति। गन्धर्वास्तीक्ष्णकामा ङ्गमास्तीक्ष्णकोपा हरिणास्तीक्ष्णभया वयं तीक्ष्णक्षुधाश्च। ाचित् स मम पुत्रः क्षुधार्तस्य मे गतसूर्येऽहनि अनामिषः तः। क्षुत्पिपासापरीतेन मया कोपाद् वार्धक्याच्च स भर्त्सितः। आहाराभावान्मया निन्दितः स मां समाश्वास्याब्रवीत्। ा! अहमामिषार्थी यथाकालं महेन्द्रस्य गिरेर्द्वारमावृत्य समास्थित सम्।तत्र सागरान्तरचारिणां सत्त्वसहस्राणां पन्थानं रोद्धुमेकोऽहमवाङ्मुखोऽध्यवसम्। तत्र सूर्योदयसमप्रभां यमादाय गच्छन् चलदञ्जनराशितुल्यः कश्चिन्मया दृष्टः। अहं ाहारार्थं ग्रहीतुं निश्चयमकरवम्। परन्तु विनीतेन तेन साम्ना ं पन्थानमनुयाचित आसम्। सामोपपन्नानां प्रहर्ता नीचेष्वपि श्चज्जनो भुवि न विद्यते। किमङ्ग मद्विधः? स वेगात्तेजसा म संक्षिपन्निव यातः। अथाहं खेचरैर्भूतैरभिगम्य सभाजितः। ा! दिष्ट्या जीवसि। रक्षणीयया स्त्रिया सह कथञ्चित् स ः। असंशयं ते स्वस्तीति महर्षयो मामब्रुवन्। ततोऽहं

भ्रष्टाभरणकौशेयां शोकोद्विग्नां रामलक्ष्मणयोर्नामनी क्रोशन्तीं मुक्तमूर्धजां हरन् स रक्षसां राजा रावणस्त्वयासादित इति। तात! अनेन कारणेन ममालस्यं संजातमिति सर्वं वृत्तं मे पुत्रः सुपार्श्वोऽब्रवीत्। तच्छ्रुत्वापि मे पराक्रमे काचिद् बुद्धिर्नाभवत्। अपक्षः पक्षी कथं किञ्चित् कर्मोपक्रामेत्? वाचा बुद्ध्या यथाशक्ति भवतामुपकरोमि। कार्यं भवतां पौरुषमाश्रयते। श्रूयतां मम वचनम्। रामस्य कार्यं ममैव। तस्माद् वाचा बुद्ध्या भवतां प्रियं करिष्यामि। श्रेष्ठमतयो मनस्विनो बलवन्तो देवैरपि दुरासदा भवन्तः कपिराजेन प्रहिताः+। निशिता रामलक्ष्मणबाणास्त्रिलोकानां रक्षणे निग्रहे च समर्थाः। दशग्रीवस्तेजोबलसमन्वितः खलु कामम्। परन्तु समर्थानां भवतां दुष्करं किञ्चिदपि नास्ति। तदलं कालविलम्बेन। बुद्धिनिश्चयः क्रियताम्। भवद्विधा बुद्धिमन्तः कर्मसु न विलम्बन्ते।

## ५९*

ततो भ्रातुः कृतोदकं स्नातं सम्पातिं समन्ततः परिवार्य वानरा गिरावुपविविशुः। सर्ववानरवृतमङ्गदं जनितप्रत्ययः सम्पातिरवदत्। मैथिलीं यथाहं जानामि तथ्यं कथयामि। निश्शब्दं कृत्वा एकाग्राः शृणुत। पुराहं सूर्यरश्मिदग्धोऽस्य विन्ध्यस्य शिखरे पतित आसम्। षड्रात्राल्लब्धसंज्ञो विह्वलन् सर्वा दिशो वीक्षमाणः किञ्चन नाभ्यजानाम्। ततः सागरान् शैलान् नदीः सरांसि वनानि च समीक्ष्य मे मतिरागता। हृष्टपक्षिगणाकीर्णः कन्दरकूटवानयं दक्षिणस्योदधेस्तीरे विन्ध्य इति निरचिनवम्। अत्र

+ Cr सहिताः। ग्राह्यः प्रहिताः। * अस्मात् सर्गादारभ्य संपातेः कथनं न्यूना पुनरुक्तमश्रद्धेयं च।

सुरैरपि सुपूजितमाश्रममासीत्। तस्मिन् निशाकरो नामोग्रतपा ऋषिरभवत्। धर्मज्ञो निशाकरः स्वर्जगाम। पश्चात् तं विनास्मिन् पर्वते अष्टसहस्रवर्षाणि न्यवसम्। विषमाद् विन्ध्याग्रात् शनैः कृच्छ्रेणावतीर्य तीक्ष्णदर्भां वसुमतीं दुःखेन पुनरागमम्। अहं तमृषिं द्रष्टुकाम आसम्। मया जटायुषा च तस्य दर्शनं बहुशः कृतम्। तस्यर्षेराश्रमपदाभ्याशे सुगन्धिनो वाता ववुः। अपुष्पितः अफलो वा कश्चिद् वृक्षस्तत्र न दृष्टः। पुण्यमाश्रममुपेत्य वृक्षमूलमुपाश्रित्य भगवन्तं निशाकरं द्रष्टुकाम आसम्। अथ स्नातमुपावृत्तं दुर्धर्षमुदङ्मुखं ज्वलिततेजसं दूरस्थमृषिमपश्यम्। प्राणिनो दातारमिव तं परिवार्य ऋक्षाः सृमरा व्याघ्राः सिंहा नागाः सरीसृपाश्चोपगच्छन्ति स्म। राजनि प्रविष्टे सर्वं सामात्यकं बलं यथा समाविशति तथा तमृषिमाश्रमप्राप्तं ज्ञात्वा तानि सत्त्वानि ययुः। ऋषिर्मां दृष्ट्वा तुष्ट आश्रमं प्रविश्य मुहूर्तमात्रात् पुनर्निर्गम्य कार्यमपृच्छत्। सौम्य! तव रोम्णां वैकल्यतां दृष्ट्वा त्वां नाभिजानामि। तव पक्षावग्निदग्धौ। तव त्वक् च व्रणिता। गृध्राणां राजानौ जवे मातरिश्वसमौ कामरूपिणौ भ्रातरौ द्वौ गृध्रौ मे दृष्टपूर्वौ। सम्पाते! त्वं ज्येष्ठः। जटायुस्तवानुजः। मानुषं रूपमास्थाय युवां मम चरणयोः पतितौ। कथं ते पक्षौ पतितौ? केनापि व्याधिना किम्? अथवा केनाप्ययं दण्डो विहितः किम्? सर्वं ममाख्याहि।

## ६0

ततः सहसा कृतं दुष्करं दारुणं तत् कर्म सूर्यानुगमनं सर्वं मुनेरकथयम्। भगवन्! ब्रणयुक्तत्वाल्लज्जया चाकुलेन्द्रियः परिश्रान्तो भाषितुं न शक्नोमि। अहं जटायुश्च गर्वमोहितौ

पराक्रमं जिज्ञासन्तौ संघर्षाद् दूरादाकाशमुत्पतितौ। कैलासशिखरे मुनीनामग्रतः अस्तमहागिरिं यावद् रविरनुयातव्यः स्यादिति पणं बद्ध्वोत्पतितौ। अथावां युगपदाकाशं प्राप्तौ महीतले रथचक्रप्रमाणानि नगराणि पृथक् पृथगपश्याव। क्वचिद् वादित्रनिर्घोषान् ब्रह्मघोषान् रक्तवाससो गायन्तीर्बह्वीस्त्रीश्चापश्याव। आकाशं तूर्णमुत्पत्यादित्यपदमास्थितावावां तद् वनं शाद्वलसममपश्याव। भूः शिलोच्चयैरुपलैः संछन्नेवादृश्यत। आपगाभिर्वसुन्धरा सूत्रैः संवीतेवादृश्यत। हिमवान् विन्ध्यो मेरुश्च जलाशये नागा इव संप्रकाशन्ते स्म। तदावयोस्तीव्रः स्वेदः खेदो भयं चाभवन्। चित्तभ्रान्तिरजायत दारुणा मूर्छा च। याम्या आग्नेयी वारुणी वा दिङ् न ज्ञाता। लोको युगान्ते अग्निना दग्धो हत इव ददृशे। महता यत्नेन भूयो रविः समवलोकितः। पृथ्वीप्रमाणेन तुल्यो भास्करो नौ प्रत्यभात्। तदा जटायुर्मामनापृच्छ्य मह्यां निपपात। अहं च तं दृष्ट्वा तूर्णमाकाशादवातरम्। मया पक्षाभ्यां रक्षितो जटायुर्न प्रादह्यत। वायुपथात् पतन् प्रमादादहं निर्दग्धः। तं जटायुषं जनस्थाने निपतितमाशङ्के। अहं दग्धपक्षो जडीकृतो विन्ध्ये पतितः। राज्याद् भ्रात्रा पक्षाभ्यां विक्रमेण च हीनः सर्वथाहं मर्तुमेवेच्छन् गिरेः शिखरात् पतिष्यामि।

## ६१

एवं मुनिश्रेष्ठमुक्त्वा भृशदुःखितोऽरुदम्। भगवान् मुहूर्तं ध्यात्वा इदमब्रवीत्। तव पुनरन्यौ पक्षौ प्रपक्षौ च भविष्यन्ति। तव चक्षुषी प्राणशक्तिः पराक्रमो बलं च भविष्यन्ति। सुमहत् कार्यं भविष्यतीति पुरा मया श्रुतम्। श्रुत्वा तपोबलेनापश्यम्। दशरथो नाम कश्चिदिक्ष्वाकुवर्धनो राजा भविष्यति। तस्य रामो

नाम महातेजाः पुत्रो भविष्यति। स रामः पित्रा नियुक्तो भ्रात्रा लक्ष्मणेन सहारण्यं गमिष्यति। जनस्थाने तस्य भार्यां राक्षसेन्द्रः सुरदानवैरवध्यो रावणो नाम नैर्ऋतो हरिष्यति। महाभागा दुःखमग्ना सा मैथिली कामैर्भक्ष्यैर्भोज्यैश्च प्रलोभ्यमाना न भोक्ष्यति। वासव इदं ज्ञात्वा सुराणामपि दुर्लभममृतप्रख्यं परमान्नं वैदेह्या दास्यति। तदन्नं प्राप्य मैथिली इदमिन्द्रात् प्राप्तमिति विज्ञायाग्रभागमुद्धृत्य रामाय भूतले न्यसिष्यति। लक्ष्मणेन सह मे भर्ता यदि जीवति तयोरथवा देवत्वं गतयोर्वा इदमन्नं भवतु इति सा तदन्नभागं दास्यति। सम्पाते! तस्या अन्वेषका रामदूताः प्लवंगमा एष्यन्ति। त्वया तेभ्यो राममहिषी आख्येया। सर्वथा न गन्तव्यम्। ईदृशः क्व गमिष्यसि? देशकालौ प्रतीक्षस्व। त्वं पक्षौ प्रतिपत्स्यसे। अहं त्वामद्यैव सपक्षकं कर्तुं नोत्सहे। त्वमिहस्थो लोकानां हितं कार्यं करिष्यसि। त्वयापि तयोर्नृपपुत्रयोर्ब्राह्मणानां सुराणां मुनीनां वासवस्य च हितं कार्यम्। अहमपि भ्रातरौ रामलक्ष्मणौ द्रष्टुमिच्छामि। चिरं प्राणान् धारयितुं नेच्छामि शरीरं त्यक्ष्यामि। इति स महर्षिरुवाच।

## ६२

स मुनिरेवं मां प्रशंस्याभ्यनुज्ञाप्य स्वमालयं प्राविशत्। अहं पर्वतस्य कन्दरात् शनैःशनैर्विसृप्य विन्ध्यं समारुह्य भवतः प्रतिपालये। अद्यैतस्य वर्षशतादधिकः कालो* गतः। मुनेर्वचो हृदि कृत्वा देशकालप्रतीक्षोऽस्मि। निशाकरे महाप्रस्थानमासाद्य स्वर्गते बहुभिर्वितर्कैर्वृतं मां सन्तापो निर्दहति। मरणे उत्थितां बुद्धिं मुनिवाक्यैर्निवर्तये। प्राणसंरक्षणाय या बुद्धिस्तेन मे दत्ता

* सम्पातिकथने पूर्वापरविरोधः स्फुटः।

सा दीप्ताग्निशिखा तम इव मे दुःखमपनयते। दुरात्मनो रावणस्य वीर्यं जानन्नपि मैथिलीं किं नारक्षस्त्वमिति पुत्रमतर्जयम्। तस्या विलपितं श्रुत्वा तौ च सीतावियोजितौ मम दशरथस्नेहं जानता पुत्रेण मम प्रियं न कृतम्। वानरैः सहैवं ब्रुवाणस्य सम्पातेस्तेषु पश्यत्सु पक्षावुत्पेततुः। सः अरुणच्छदैरुद्गतैः पक्षैः स्वां तनुं दृष्ट्वातुलं प्रहर्षं लेभे। वानरानिदमब्रवीत्। महर्षेर्निशाकरस्य प्रभावात् सूर्यरश्मिनिर्दग्धौ मम पक्षौ पुनरुत्थितौ। यौवने वर्तमानस्य मम यः पराक्रम आसीत् तमेवाद्यावगच्छामि। बलं पौरुषं चावगच्छामि। सर्वथा यत्नः क्रियताम्। सीतामधिगमिष्यथ। ममायं पक्षलाभो वः सिद्धिप्रत्ययकारकोऽस्ति। इति वानरानुक्त्वा पक्षिश्रेष्ठः सम्पातिर्गतिं जिज्ञासुर्गिरेः शृङ्गादुत्पपात। सम्पातेस्तद् वचनं श्रुत्वा वानराः प्रीतिसंहृष्टमानसा विक्रमाभ्युदयोन्मुखाश्च बभूवुः। अथ पवनसमानविक्रमाः प्रतिलब्धपौरुषाः प्लवगवरा अभिजिन्मुहूर्तं निरीक्ष्य+ जनकसुतापरिमार्गणोन्मुखा दक्षिणां दिशं ययुः।

## ६३

एवं गृध्रराजेनाख्याताः सिंहविक्रमा वानराः संगताः प्रीतिसंयुक्ताश्च समुत्पत्य विनेदुः। ते सम्पातेर्वचनं श्रुत्वा हृष्टाः सीतादर्शनकाङ्क्षिणश्च रावणनिवासमुद्दिश्य सागरं जग्मुः। तं देशमभिक्रम्य लोकस्य कृत्स्नं प्रतिबिम्बमिव स्थितं समुद्रं ददृशुः। दक्षिणसमुद्रस्योत्तरदिशां समासाद्य संनिवेशं चक्रुः। जले क्रीडद्भिर्महद्भिर्विकृतैर्विविधैः सत्त्वैर्व्यत्यस्तैः सुमहोर्मिभिश्च समाकुलमन्यत्र प्रसुप्तमिवान्यतः क्रीडन्तमिव क्वचित् पर्वतमात्रैस्तरङ्गैरावृतं पातालतलवासिभिर्दानवेन्द्रैश्च संकुलं रोमहर्षकरं

---

+ Cr अभिजिदभिमुखां। ग्राह्यः – अभिजिदभिमुखा।

समुद्रं दृष्ट्वा कपिकुञ्जरा विषेदुः। आकाशमिव दुष्पारं सागरं प्रेक्ष्य विषेदुः। कथं कार्यमिति परस्परमब्रुवन्। सागरनिरीक्षणाद् विषण्णां हरीणां वाहिनीं दृष्ट्वा तानङ्गद आश्वासयामास। विषादेन नः कार्यं न सेत्स्यति। विषादो महादोषवान्। क्रुद्धः सर्पो बालमिव विषादः पुरुषं हन्ति। विक्रमे प्रदर्शयितव्ये विषादो यमभिभवति+ तेजसा हीनस्य तस्य पुरुषार्थो न सिध्यति। तस्यां रात्र्यां व्यतीतायामङ्गदो वानरैः सह पुनर्मन्त्रयामास। अङ्गदं परिवार्य वानरसेना वासवं परिवार्य देवसेनेव बभौ। वालितनयादन्यत्र हनुमतोऽन्यत्र कोऽन्यस्तां वानरसेनां स्थापयितुं शक्नुयात्? ततो वानरवृद्धान् सैन्यं च संमान्याङ्गद उवाच। इदानीं महातेजाः कः सागरं लङ्घिष्यति? कः सुग्रीवं सत्यसन्धं करिष्यति? को वीरो योजनशतं लङ्घेदिमान् वानरनायकांश्च महाभयान्मोचयेच्च? कस्य प्रसादात् सिद्धार्था इतो निवृत्य दारान् पुत्रान् गृहाणि च सुखिनः पश्येम? कस्य प्रसादाद् रामं लक्ष्मणं सुग्रीवं च संहृष्टा अभिगच्छेम? यदि कश्चिद् हरिः सागरप्लवने समर्थोऽस्ति तर्हि स शीघ्रमस्माकमभयं ददातु। अङ्गदस्य वचः श्रुत्वा न कश्चित् किञ्चिदब्रवीत्। सर्वा हरिवाहिनी स्तिमितेवाभवत्। पुनश्चाङ्गदः प्राह। भवन्तः सर्वे बलवतां श्रेष्ठा दृढविक्रमा विशिष्टकुलजाता अभीक्ष्णशः पूजिताश्च। भवत्सु कस्यापि गमने निरोधो नाम न भवेत्। प्लवने यस्य या शक्तिर्ब्रूध्वम्।

## ६४

अङ्गदवचः श्रुत्वा गजो गवाक्षो गवयः शरभो गन्धमादनो मैन्दो द्विविदः सुषेणो जाम्बवान् सर्वे च ते वानरश्रेष्ठा यथाक्रमं

---

+ Cr विषादोऽयं प्रसहते। विषादो यं प्रसहते इति स पाठ्यः।

गतौ स्वां स्वां शक्तिमूचुः। गजो योजनानां दश गवाक्षो विंशतिं गवयस्त्रिंशतं शरभश्चत्वारिंशतं गन्धमादनः पञ्चाशतं मैन्दः षष्टिं द्विविदः सप्ततिं सुषेणः अशीतिं चोचुः। ततो वृद्धतमो जाम्बवान् प्रत्यभाषत। पूर्वमस्माकमपि कश्चिद् गतिपराक्रम आसीत्। ते वयं साम्प्रतं वयसः पारमनुप्राप्ताः स्मः। किन्तु अस्यां स्थित्यां यदर्थं सुग्रीवो रामश्च कृतनिश्चयौ तदिदं कार्यमुपेक्षितुं न शक्यम्। साम्प्रतं वार्धके मम या गतिरस्ति तां निबोधत। निस्संशयं योजनानां नवतिं गमिष्यामि। मम गमने पराक्रम एतावानेव नासीत्। पूर्वं महाबलेर्यज्ञे क्रममाणस्त्रिविक्रमः सनातनो विष्णुर्मया प्रदक्षिणीकृतः। इदानीं वृद्धः प्लवने मन्दपराक्रमश्चास्मि। यौवने मे बलमप्रतिमं परमासीत्। सम्प्रति गमने ममैतावतीं शक्तिं तर्कयामि। एतावतास्य कार्यस्य संसिद्धिर्न भविष्यति। अथ प्राज्ञोऽङ्गदो जाम्बवन्तं मानयित्वाब्रवीत्। अहं महदेतद् योजनशतं गमिष्यामि। निवर्तने मे शक्तिः स्यान्नवेति न निश्चितम्। तं जाम्बवानुवाच। वानरश्रेष्ठ! गमने तव शक्तिर्ज्ञायते। त्वं योजनानां शतसहस्रं गन्तुं प्रतिनिवर्तितुं च समर्थोऽसि। तथाप्ययं विधिर्नोच्यते। प्रेषयिता स्वामी कथञ्चन प्रेष्यो न भवति। सर्वोऽयं जनो भवता प्रेष्यः। स्वामिभावे व्यवस्थितो भवानस्माकं रक्षणीयः। स्वामी सैन्यस्य रक्षणीयः। एषा गतिः। तस्माद् रक्षणीयवस्तुवत् त्वमस्माकं प्रतिपाल्यः। अस्य कार्यस्य त्वमेव मूलम्। कार्यस्य मूलं संरक्ष्यम्। एष कार्यविदां नयः। मूले सति पुष्पफलादयो गुणाः सिध्यन्ति। ततो भवानस्य कार्यस्य साधनम्। अस्मिन् विषये बुद्धिविक्रमसंपन्नस्त्वं हेतुः। अस्माकं गुरुपुत्रस्त्वं पूज्यः। वयं भवन्तमाश्रित्यार्थसाधने समर्था भवामः।

ततोऽङ्गदः पुनर्जाम्बवन्तमवदत्। यद्यहं न गमिष्यामि अन्यो वानरपुङ्गवश्च न गमिष्यति तर्हि पुनः प्रायोपवेशनमस्माकं कार्यं स्यात्। वानरपतेराज्ञामकृत्वा किष्किन्धां गत्वापि प्राणरक्षणं न पश्यामि। स सुग्रीवः कोपे प्रसादे चात्यर्थं समर्थः। तस्याज्ञामतिक्रम्य गमने विनाशो भवेत्। तस्माद् यथेदं कार्यमन्यथा न भवेत् तथा दृष्टार्थो भवानेव संचिन्तयितुमर्हति। तदा जाम्बवान् प्रत्युवाच। हे वीर! तव कार्यं मनागपि न परिहीयते। यः कार्यं साधयिष्यति तं संचोदयामि। ततो हरिप्रवीरो जाम्बवान् प्रसिद्धमुत्पततां श्रेष्ठमेकान्ते सुखोपविष्टं वानरवीरं हनुमन्तं संचोदयामास।

६५

विषण्णामनेकशतसाहस्रीं वानरसेनां समुदीक्ष्य जाम्बवान् हनूमन्तमेवमब्रवीत्। वानरलोकवीर! सर्वशास्त्रविदां वर! हनुमन्! तूष्णीमेकान्तमाश्रित्य किं न जल्पसि? तेजसा बलेन च त्वं सुग्रीवस्य रामलक्ष्मणयोश्च समोऽसि। विनताकश्यपयोः पुत्रः सर्वपक्षिश्रेष्ठो महाबलो गरुत्मानिति विख्यातोऽस्ति। महाबलो महावेगः स पक्षी सागरे सर्पानुद्धरन् मया बहुशो दृष्टः। तस्य पक्षयोर्यावद् बलं तव भुजयोर्बलं तावदस्ति। तव विक्रमस्तेजश्च तस्मान्नापहीयते। तव बलं बुद्धिस्तेजः सत्त्वं च सर्वभूतेषु विशिष्टम्। आत्मानं किं न बुध्यसे? अप्सरसां श्रेष्ठा पुञ्जिकस्थला अञ्जनेति विख्याता। सा वानरस्य केसरिणः पत्नी। शापात् सा वानरेन्द्रस्य कुञ्जरस्य दुहिता कामरूपिणी वानरी अभवत्। कामरूपिणी चारुसर्वाङ्गी सा वानरी मानुषं विग्रहं कृत्वा उत्तमयौवनशालिनी भूत्वा महार्हक्षौमसंवीता विचित्रमाल्याभरणा

प्रावृडम्बुदसन्निभे पर्वताग्रे व्यचरत्। तस्या रक्तदशं पीतं शुभं वस्त्रं मारुतः शनैरपाहरत्। ततो देवो वायुस्तस्या वृत्तौ सुसंहतावूरू पीनौ सहितौ स्तनौ रम्यमाननं च ददर्श। विशालायतश्रोणीं तनुमध्यां शुभसर्वाङ्गीं तां दृष्ट्वैव पवनः काममोहितो बभूव। श्लाघ्यां तां तल्लग्नमना वायुर्मन्मथाविष्टसर्वाङ्गः पीनाभ्यां भुजाभ्यां पर्यष्वजत। तत्रैव संभ्रान्ता सा मम पातिव्रत्यं को नाशयितुमिच्छतीत्यब्रवीत्। अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत। सुश्रोणि! न त्वां हिनस्मि। मा भूत्ते भयम्। हे यशस्विनि! यत् त्वां परिष्वज्य मनसा गतोऽस्मि तत्ते वीर्यवान् बुद्धिसंपन्नः पुत्रो भविष्यतीति। हनुमन्! ततो बालस्त्वं महावने अभ्युत्थितं सूर्यं दृष्ट्वा फलमिति जिघृक्षुरुत्प्लुत्य दिवमभ्युद्गतोऽभवः। महाकपे! अथ योजनानां त्रीणि शतानि गत्वा सूर्यतेजसा निर्धूतोऽभवः। ततोऽपि ते विषादो नाभवत्। तदन्तरे तूर्णमन्तरिक्षमापततस्ते क्रोधाविष्टेनेन्द्रेण वज्रं क्षिप्तम्। तदा शैलशिखरे ते वामो हनुरभज्यत। ततस्ते नामधेयं हनुमानिति कीर्त्यते। तदा प्रभञ्जनो वायुस्त्वां प्रहतं दृष्ट्वा स्वयं भृशसंक्रुद्धस्त्रिलोके न ववौ। त्रैलोक्ये क्षुब्धे भुवनेश्वराः सर्वे सुराः संभ्रान्ताः संक्रुद्धं मारुतं प्रसादयामासुः। पवने प्रसादिते ब्रह्मा तुभ्यं समरे शस्त्रावध्यतां वरं ददौ। वज्रनिपातेनाबाधितं त्वां समीक्ष्य प्रीतात्मा शक्रः स्वच्छन्दतस्ते मरणं भूयादित्युत्तमं वरं ते ददौ। भीमविक्रमः स त्वं केसरिणः क्षेत्रजः पुत्रोऽसि। मारुतस्यौरसः पुत्रः। तेजसा तत्समोऽसि। वायुसुतस्त्वं प्लवने तत्समो हि। वयमद्य गतप्राणाः। भवान् साम्प्रतमस्मासु दाक्ष्यविक्रमसंपन्नः अपरः सुग्रीव इवास्ति+। तात! त्रिविक्रमावतारसमये सशैलवनकानना पृथिवी मया त्रिःसप्तकृत्वः

+ Cr पक्षिराज। ग्राह्यः – कपिराज।

प्रदक्षिणं परिक्रान्ता। तदा देवशासनादोषध्योऽस्माभिः सँचिताः। ताभिरमृतं निष्पन्नम्। तदास्माकं महद् बलमासीत्। इदानीं वृद्धोऽहं परिहीनपराक्रमः सवृत्तः। संप्रत्यस्माकं भवान् सर्वगुणान्वितः। तद् विक्रम्य विजृम्भस्व। प्लवमानानामुत्तमोऽसि। सर्वा वानरसेना त्वद्वीर्यं द्रष्टुकामास्ति। हरिशार्दूल! हनुमन्! महार्णवं लङ्घस्व। सर्वभूतानां तव गतिरुत्तमास्ति। सर्वे वानरा विषण्णाः सन्ति। किमुपेक्षसे? महावेग! विष्णुस्त्रीन् विक्रमानिव विक्रमस्व। ततो जाम्बवताभिचोदितः प्रतीतवेगः पवनात्मजो हनुमान् वानरवीरवाहिनीं प्रहर्षयन् तदात्मनो रूपं महच्चकार।

## ६६

महाबलो हनुमान् संस्तूयमानो हर्षाद् बलमुपेत्य लाङ्गूलं समाविद्ध्य व्यवर्धत। सर्वैर्वानरपुङ्गवैः संस्तूयमानस्य तेजसापूर्यमाणस्य तस्य रूपमनुत्तममासीत्। विशाले गिरिगह्वरे सिंहवद् हनुमान् सम्प्रति जजृम्भे। जृम्भमाणस्य तस्याम्बरीषोपमं दीप्तं मुखं विधूमः पावक इवाशोभत। वानराणां मध्यादुत्थितः संप्रहृष्टतनूरुहो हनुमान् वृद्धान् हरीनभिवाद्येदमब्रवीत्। हुताशनसखो बलवानप्रमेय आकाशगोचरो वायुः पर्वताग्राण्यपीडयत्[+]। शीघ्रवेगस्य महात्मनस्तस्य मारुतस्याहमौरसः पुत्रोऽस्मि। प्लवने मे समो नास्ति। विस्तीर्णमम्बरमालिखन्तमिव स्थितं मेरुगिरिमनायासेन सहस्रशः प्रदक्षिणं कर्तुमुत्सहे। बाहुवेगप्रणुन्नेन सागरेण सपर्वतनदीह्रदं लोकं प्लावयितुमुत्सहे। ममोरुजङ्घ-वेगेन समुत्थितः समुद्रः सम्मूर्छितमहाग्राहो भविष्यति। पन्नगाशनं पक्षिसेवितमाकाशे पतन्तं वैनतेयं सहस्रशः प्रदक्षिणं कर्तुमहं शक्तः। हे प्लवगर्षभाः! उदयाद्रेः प्रस्थितं ज्वलन्तमादित्यमनस्तमितमभिगन्तुं समुत्सहे। ततो भूमिमसंस्पृश्य महता भीमेन प्रवेगेन

---

Cr अरुजन्। ग्राह्यः – अरुजत्।

पुनरागन्तुमुत्सहे। आकाशसंचारिणः सर्वानतिक्रमितुमुत्सहे। सागरान् शोषयिष्यामि। मेदिनीं दारयिष्यामि। प्लवमानः पर्वतान् कम्पयिष्यामि। ऊरुवेगेन महार्णवं हरिष्ये। अद्य विहायसा प्लवमानं मां लतानां पादपानां च विविधं पुष्पं सर्वशोऽनुयास्यति। पुष्पपूर्णो मे मार्गो बहुनक्षत्रयुतः स्वातिनक्षत्रमार्ग इव भविष्यति। उत्पतन्तं चरन्तं निपतन्तं च मां सर्वभूतानि द्रक्ष्यन्ति। महामेरुप्रतीकाशं दिवमावृत्य गच्छन्तमम्बरं ग्रसमानमिव मां द्रक्ष्यथ। समाहितः प्लवमानो जीमूतान् विधमिष्यामि। पर्वतान् कम्पयिष्यामि। सागरं क्षोभयिष्यामि। वैनतेयस्य वा मम वा मारुतस्य वा समाना शक्तिर्भवति। सुपर्णं मारुतमृते किंचनान्यद् भूतं न पश्यामि प्लुतं मां यदनुव्रजेत्। घनादुत्थिता विद्युदिव निमेषान्तरमात्रेण सहसा निरालम्बनमम्बरं निपतिष्यामि। सागरं प्लवमानस्य मे रूपं तदा त्रीन् विक्रमान् प्रक्रममाणस्य विष्णोरिव भविष्यति। हे वानराः! अहं बुद्ध्या प्रपश्यामि। मम मनश्चेष्टा च तथास्ति। अहं मैथिलीं द्रक्ष्यामि। प्रमोदध्वम्। वेगे मारुतस्य जवे गरुडस्य च समोऽस्मि। योजनानामयुतं गमिष्यामीति मे मतिः। विक्रम्य वज्रायुधयुतस्य वासवस्य ब्रह्मणो वा हस्तात् सहसामृतमिहानये। लङ्कां समुद्धृत्य बा गच्छेयम्। इति मे मतिः। एवं गर्जन्तममितौजसं तं वानरश्रेष्ठं परिसंहृष्टो जाम्बवानुवाच। हे मारुतात्मज! वेगवन्! वीर! ज्ञातीनां विपुलः शोकस्त्वया प्रणाशितः। तव कल्याणासक्ताः समागताः कपिमुख्याः कार्यसिद्ध्यर्थं मङ्गलं करिष्यन्ति। ऋषीणां प्रसादेन कपिवृद्धमतेन गुरूणां प्रसादेन च त्वं महार्णवं संप्लवस्व। तवागमनं यावदेकपादेन स्थास्यामः। सर्वेषां बानराणां जीवनानि त्वद्गतानि तिष्ठन्ति। ततो हनुमान् तान् वानरानुवाच। इयं मही प्लवने मम वेगं न धारयिष्यति। शिलासंकटशालिनोऽस्य महेन्द्रपर्वतस्यैतानि

शिखराणि स्थिराणि महान्ति च सन्ति। एतानीतो योजनानां शतं प्लवमानस्य मम पादयोर्निष्पेषं धारयिष्यन्ति। ततो मारुतप्रख्यो हनुमान् नानाविधैः पुष्पैर्वृतं मृगसेवितशाद्वलं लताकुसुमसंबाधं नित्यपुष्पफलद्रुमं सिंहशार्दूलसहितं मत्तमातङ्गसेवितं मत्तद्विजगणोद्घुष्टं जलप्रवाहव्याकुलं नगश्रेष्ठं महेन्द्रमारुरोह। महेन्द्रसमविक्रमो हनुमान् महाशृङ्गैरुच्छ्रितं तं महेन्द्रमभितो विचचार। महात्मना तेन पादाभ्यां पीडितो महाशैलो सिंहाभिहतो महान् मत्तो द्विप इव ररास। विप्रकीर्णशिलोच्चयो वित्रस्तमृगमातङ्गः प्रकम्पितमहाद्रुमो जलप्रवाहान् मुमोच। तदा तस्मान्महागिरेर्मद्यपानतीव्रचित्तानि गन्धर्वमिथुनानि विहङ्गाश्चोत्पेतुः। विद्याधरगणास्तन्महासानूनि तत्यजुः। महोरगा बिलेषु निलिल्यिरे। शैलशृङ्गाणि शिलाश्च निपेतुः। तदा स धरणीधरो निःश्वसद्भिरर्धनिःसृतैर्भुजगैः सपताक इव बभौ। त्राससंभ्रान्तैर्ऋषिभिस्त्यज्यमानः शिलोच्चयः सार्थहीनो महति कान्तारे सीदन् अध्वग इवालक्ष्यत। वेगवान् वेगविषये निश्चितमनाः परवीरहन्ता मनस्वी महानुभावः स वानरमहावीरो हनुमान् मनः समाधाय मनसा लङ्कां जगाम।

समाप्तं किष्किन्धाकाण्डम्

कालूरिवंशजातेन हनुमन्तरावेण विरचिते
सरलगद्यात्मकश्रीमद्वाल्मीकिरामायणे*
बालकाण्डायोध्याकाण्डारण्यकाण्डकिष्किन्धाकाण्डानि
समाप्तानि।

# इति शम्

* रामायणपदव्युत्पत्तिर्गोविन्दराजेन इत्थं प्रदर्शिता (बाल. ४.६)। रमयतीति रामः रामो रमयतां वर इत्यार्षनिर्वचनात् यद्वा रमन्तेऽस्मिन् सर्वे जना इति रामः अकर्तरि च कारके संज्ञायामिति घञ् सः अय्यते प्रतिपाद्यतेऽनेनेति रामायणम् अयतेर्धातोः कर्मणि ल्युट् पूर्वपदात् संज्ञायामग इति णत्वम्।

# शब्दप्रयोगचर्चा

ग्रन्थे उपयुक्तां भाषामुद्दिश्य अस्मिन् निबन्धे एते विषया विचार्यन्ते। १. लिट्लङ्लुङां प्रयोगे का व्यवस्था? २. अपि लिट् परोक्षभूते एव प्रयुक्तः? ३.उभयपदिधातूनां प्रयोगः कथम्? ४. युष्मद्भवच्छब्दयोरर्थे भेदः अस्ति किम्? ५. ण्वुल्तृचौ वर्तमानकाले एव प्रयोज्यौ किम्?

१. लिट्लङ्लुङां प्रयोगे का व्यवस्था?

पाणिनीयव्याकरणानुसारेण अनद्यतनपरोक्षे लिट् (३–२–११५), अनद्यतने लङ् (३–२–१११), सामान्ये (अद्यतनानद्यतनोभयविधभूतार्थे) लुङ् (३–२–११0) इति त्रयः सन्ति भूतकालप्रयोगाः। कालिदासादीनां काव्येषु लिट्लङ्लुङः परस्परं पार्श्वतः प्रयुक्ता इति सुविदितमतो नोदाह्रियन्ते। श्रुतिरामायणमहाभारतेषु तेषां प्रयोगाः कथं सन्तीति परिशीलयामः।

महाभारतम् – भण्डारकरप्रकाशनम्। गीताप्रेस्संख्याः कुण्डलान्तरेषु दत्ताः। आदिपर्व १२२.२४ (१३0.४0) अगमम्। १२२.२५ (१३0.४१) अवसम्। १२२.२८ (१३0.४५) अब्रवीत्। (१३0.४९) उपयेमे। (१३0.५५) ननर्त। १२२.३२foot note (१३0.६१) समुपागमम्। १२५.२९ (१३४.२९) अभूत्, बभूवुः। १२५.३१ (१३४.३१) पर्यवारयत्। १२७.१८ (१३६.१९) उपागमत्। १२७.१९ (१३६.२0) विनिर्ययौ। १२७.२0 (१३६.२१) ययुः। १२७.२२foot note (१३६.२३) अजायत। १२७.२३ (१३६.२४) अन्तरधीयत। १२७.२४ (१३६.२५) अभवत्।

विराटपर्व १६.२ (१७.२) जगाम। १६.३ (१७.३) चिन्तयामास। १६.४ (१७.४) अगमत्। १६.५ (१७.६) प्राद्रवत्। १६.६ (१७.११) उपातिष्ठत। १६.७ (१७.१३) प्राबोधयत्। १६.८ (१७.१४) अभ्यभाषत। २0.२0 (२१.२४) प्रत्युवाच। २0.२२ (२१.२६) अब्रु(=ब्र)वम्। Cr. Appendix (२१.२८) प्रेषयत् (= प्रैषयत्)। Cr. Ap (२१.३0) अवर्तयत्। Cr. Ap (२१.४३) अवधीत्।

रामायणम्–बरोडाप्रकाशनम्। गीताप्रेससंख्याः कुण्डलान्तरेषु। बाल १.५४ (१.६८) अगर्जत्, निर्जगाम। १.६0 (१.७५) समुपागमत्। ७२.६ (७३.७) अपूजयत्। ७२.७ (७३.८) उण मत्। ७२.१२ (७३.१३) प्रत्युवाच। अरण्य ४.१ (५.२) वीत्। ४.४ (५.६) ददर्श। ४.२१ (५.२५) उपागमत्। ४.२२ (५.२६) निषेदुः। ४.२३ (५.२७) न्यवेदयत्। किष्किन्धा ८.२४ (८.२५) अब्रवीत्। ८.४0 (८.४१) अभूत्। ८.४४ (८.४५) लेभे। १२.१५ (१२.१५) व्यनदद्। १२.१६ (१२.१६) निष्पपात। १२.१७ (१२.१७) अभूत्। ३६.२२ (३७.२२) उपागमन्। ३६.२३ (३७.२३) समवर्तत। ३६.२७(३७.२७) ददृशुः। ४५.४ (४६.४) विवेश। ४५.६ (४६.६) आपुपूरे। ४५.८ (४६.८) आगाम्। ४५.९ (४६.१0) आजगाम, अददाम्। ४५.१६ (४६.२४) विवेश। ५६.४ (५७.४) चक्रुः। ५६.६ (५७.६) अभूत्। ५६.१२ (५७.१२) अवधीत्। ५६.१३ (५७.१३) अभिषेचयत् = अभ्यषेचयत्।

बृहदारण्यकोपनिषद् – १.२.७ ततोऽश्वः समभवत् यदश्वत् तन्मेध्यमभूदिति। १.३.१. देवा ऊचुः। ऐतरेयब्राह्मणम् पञ्चिका

७. प्रापत्तं होवाच संनाहं नु प्राप्नोद्व्रजस्व मानेनेति। (अस्मिन् वाक्ये प्रापत् इति लुङ् उवाच इति लिट् प्राप्नोत् इति लङ् च सन्ति।

आभिरुदाहृतिभिरिदं निर्णीयते। श्रुतिवाङ्मयादारभ्याद्ययावत् लिट्लङौ अनद्यतनभूते, लुङ् सर्वस्मिन् भूते च प्रयुक्ताः सन्ति। वर्तमानकालसमीपभूते एव लुङ् पुरा प्रयुक्तः स्यादिति वा संप्रति प्रयोक्तव्य इति वा केषाञ्चनाधुमिकबैयाकरणानामभिप्रायौ निराधारौ। बहुप्राचीनसाहित्ये लुङ् विरलं प्रयुक्तः। भागवतमारभ्य लुङ्प्रयोगः प्रचुरीभूतः। द्रष्टव्यो गजेन्द्रमोक्षघट्टः।

२. अपि लिट् परोक्षभूते एव प्रयुक्तः?

(३–२–११५) पाणिनिसूत्रानुसारेण लिट् परोक्षे* एव प्रयोक्तव्यः मत्तोन्मत्तात्यन्तापह्नवकरान् विहाय (२७७५)। प्रायेण लिट् परोक्षभूते प्रयुक्तः। परन्तु रामायणे महाभारते अन्येषु च काव्येषु साधारणस्थितिषु च लिट् समक्षभूते च प्रयुक्तः।

महाभारतम् आदि (१३०.४९) उपयेमे। (१३०.५५) ननर्त। विराट २०.२० (२१.२४) प्रत्युवाच।

रामायणम् अयोध्या १०५.१३ (११३.१३) ददौ। अरण्य ९.७ (१०.७) मामूचुः। ३६.१३ (३८.१६) आजगाम। किष्किन्धा ९.६ (९.६) ममृषे, निष्पपात। ९.८ (९.८) निर्जगाम। ९.९ (९.९) प्रदुद्राव। ९.११ (९.११) प्रविवेश। ९.१२ (९.१२) मामुवाच। १०.१ (१०.१) अहं प्रसादयाञ्चक्रे। ४५.४ (४६.४) विवेश। ४५.६ (४६.६) आपुपूरे। ४५.९ (४६.१०) आजगाम। ५७.६ (५८.६) छादयामास। ६०.१ (६१.१) आचचक्षे।

---

* छन्दसि लिट् भूतसामान्ये वर्तते (३–२–१०५)। अनद्यतनपरोक्षत्वं छन्दसि न विवक्षितमिति भावः। बा.म.

पञ्चरात्रम् भासः १.४. आरुरोह। चम्पूभारतम् अनन्तभट्टः १०.४० इयेष।

एते समक्षे लिट्प्रयोगाः सन्ति। अतः फलति साहित्ये लिट् समक्षभूते च उपयुक्तो दृश्यते।

३. उभयपदिधातूनां प्रयोगः कथम्?

स्वरितञितः कर्त्रभिप्राये क्रियाफले (१-३-७२) इति सूत्रेण कर्तृगामिनि फले उभयपदी धातुः आत्मनेपदे प्रयोज्यः अन्यगामिनि फले परस्मैपदे च। महाभाष्ये पचन्ति भक्तकराः कुर्वन्ति कर्मकराः यजन्ति याजकाः इति उदाहृताः। १-३-१८, १-३-६२, १-३-७४ सूत्रेषु चायमेवाभिप्रायो दृढीकृतः। कौमुदीव्याख्यातारो यथास्थितमेवानुवदन्ति। केचनाधुनिका वैयाकरणा अयं नियमः प्राचीनव्याकरणशास्त्रे एव दृश्यते साहित्ये तु न अनुसृत इति वदन्ति। इममभिप्रायं सोदाहरणं चर्चयामः।

रामायणबालकाण्डे विवाहघट्टे रामलक्ष्मणशत्रुघ्नान् प्रति जनकः पाणिं पाणिना गृह्णीष्व इति भरतं प्रति पाणिं पाणिना गृहाण इति वदति।

भज गोविन्दं भज गोविन्दम् इति शङ्करभगवत्पादाचार्याः। पाणिनिसूत्रानुसारेण भजस्व इति वक्तव्यम्। लिह भक्ष चुम्ब धातवः उभयपदिनः। तेषां परस्मैपदित्वमनवकाशं स्यात् फलस्य सर्वदा कर्तृगामित्वात्। प्रियामुखं किंपुरुषश्चुचुम्बे (कुमार. ३.३८) इत्यत्र चुचुम्बे चुचुम्ब इति मल्लिनाथः। मैथुनार्थको यभधातुः सिद्धान्तकौमुद्यां परस्मैपदिषु पठितः। स आत्मनेपदी चास्ति (Monier Williams, V.S. Apte 1959)। अतः स उभयपदी भवति। कदा नाम स धातुः परगामिनि फले परस्मैपदी भवेत्?

अधोदत्तेषूदाहरणेषु परस्मैपदिनः स्थाने आत्मनेपदी आत्मनेपदिनः स्थाने परस्मैपदी च स्थापनीयः पाणिनिसुत्रानुसारेण।

वलित्रयं चारु बभार बाला। (कुमा १.३९)· निनाय सात्यन्तहिमोत्किरानिलाः सहस्य रात्रीः। कुमा. (५.२६)· दूरमधश्चकार सा। कुमा (५.२९)· सुदक्षिणा दौर्हृदलक्षणं दधौ। (रघु. ३.१)· अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात्। (रघु ८.२०). कमलवनोद्घाटनं कुर्वते ये। (सूर्यशतकम् २). यानतनु वितनुते तिग्मरोचिर्मरीचीन्। (सूर्यशतकम् ४)·

महाभारतम् वनपर्व नलोपाख्यानम्। ५०.६ (५३.६) स प्रजार्थे परं यत्नमकरोत्। ५०.१८ (५३.१९) जग्राह पक्षिणम्। ५२.१ (५५.१) तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत। रामायणम् अरण्यकाण्डम् ३४.१३ (३६.१४) आनयिष्यामि (= आनेष्यामि)। ३४.१९ (३६.२०) हरिष्यामि। ४४.२ (४६.२) अभिचक्राम। ५०.३७ (५२.३९) हरति।

व्याकरणमहाभाष्यम् पस्पशाह्निकम् अथ शब्दानुशासनम्। यो हि शब्दान् जानात्यपशब्दानप्यसौ जानाति। विभक्तिं कुर्वन्ति।

छान्दोग्योपनिषद् – उद्गीथमाजह्रुः। (१.२.१) वदतोर्वाचः श्रोष्यामीति। (१.८.२)

बृहदारण्यकोपनिषद् – ततोऽन्यद्विभक्तं यद्विजानीयात्। (४.३.३०). मेधावी राजा सर्वेभ्यो मान्तेभ्य उदरौत्सीदिति। (४.३.३३)

एते प्रयोगाः (१–३–७२) पाणिणिसूत्रं नानुसरन्ति। किञ्च बहुप्राचीनसाहित्ये धातवः प्रायेण उभयपदिनो दृश्यन्ते पश्यते विशते पृच्छसे जयते सहिष्यति इच्छामहे इत्यादयः प्रयोगा उपलभ्यन्ते। अद्यापि उपसर्गयोगेन कदाचित् परस्मैपदी आत्मनेपदी परिणमति (यथा संगच्छते) आत्मनेपदी परस्मैपदी

च परिवर्तते (यथा विरमति)। केषाञ्चन धातूनां (यथा मृङ् वृतु) लकारेषु कानिचन रूपाणि परस्मैपदे कानिचन आत्मनेपदे च प्रचलन्ति। सर्वमिदं संधार्येदं निश्चेतुं युज्यते यद् बहुप्राचीनकाले सर्वे धातव उभयपदिन आसन्* क्रमात् तेषां प्रयोगे संकोचः समभवदिति। बहुप्राचीने प्राचीने अर्वाचीने च वाङ्मये उभयपदिधातूनां प्रयोगे पाणिनिसूत्रा (१-३-७२) नुसारो न दृश्यते। परस्मैपदी आत्मनेपदीति क्रियारूपद्वैविध्यमेव दृश्यते न तु तयोः प्रयोगे अन्वर्थता। केवलं परस्मैपदिनां केवलमात्मनेपदिनां च प्रयोगे कोऽपि नियमो नास्ति। अर्थात् सर्वस्य परस्मैपदिधातोः फलमन्यगामि भवतु सर्वस्यात्मनेपदिनः फलं कर्तृगामि अस्तु इति न कोऽपि नियमो विद्यते। सर्वः आत्मार्थमेवाश्नाति प्रायेणात्मनः कृते पठति पश्यति च। ते धातवः परस्मैपदिनः सन्ति। बाधृ क्षमूष् धात्वोः फलं यद्यपि परगामि भवेत् तथापि तौ आत्मनेपदिनौ स्तः। केवलमुभयपदिधातुष्वेव व्याकरणशास्त्रेण नियमः क्रियते। परस्मैपदिन आत्मनेपदिनश्च यदा स्वस्थानेषु अन्वर्थतां न विन्दन्ति तर्हि कथं नाम ते परस्थानेषु अर्थात् उभयपदिस्थानेषु अन्वर्थनामानो भवेयुः?

आत्मनेपदिनः परस्मैपदिनश्चेति द्विविधधातूनां नामकरणं पाणिनेः बहुकालं पूर्वमेव कृतं पाणिन्यादिभिरनुसृतं च भवेत्। तत्पुरुषकर्मधारयनिष्ठारथन्तरा (३-२-४६, २९६३) दिवत् तन्नाम्नोरवयवार्थानुगमो न कर्तव्यः स्यात्। तन्नामद्वयं केवलं संकेतितं रूढं च स्यात्। सुधियो विभावयन्तु।

---

* द्रष्टव्यो मम निबन्धः महाभारतीयाः केचन भाषाविशेषाः (साहितीजगती १९९०)। कर्मकतृत्वप्रयोगे च क्वचित् परस्मैपदी दृश्यते। रामायणे च। बाल ६६.१८ (६७.१८) अयो ५७.१६ (६३.२२), कि ११.३९ (११.४१)।

अस्याश्चर्चायाः सारांशोऽयं प्रतिपाद्यते। वैदिकवाङ्मये धातवः सर्वे उभयपदिनः सन्ति। क्रमात् तेषां प्रयोगे संकोचः प्राप्तः। आत्मनेपदी परस्मैपदीति संज्ञाद्वयं पाणिनेर्बहुकालं पूर्वं कृतं वैयाकरणैः स्वीकृतं च। तौ केवलं संकेतितशब्दौ न तु अन्वर्थौ। पाणिनिनियमा (१-३-७२) नुसारेण उभयपदिधातूनां प्रयोगः कदापि न कृतः न च कर्तुं शक्यः।

४. युष्मद्भवच्छब्दयोरर्थे भेदः अस्ति किम्?

भवच्छब्दो गौरवं सूचयतीति Monier Williams तथा V.S. Apte. परन्तु दत्तप्रयोगास्तमर्थविशेषं दृढं न स्थापयन्ति। शब्दकल्पद्रुमे एतत्पदं युष्मदर्थम् इति वाचस्पत्ये युष्मदर्थे सर्वनामता इति च लिखितं गौरवयुतमिति न लिखितम्। भवति भिक्षां देहि इत्यस्ति वैदिकवाक्यम्। एतद्वाक्यं भवच्छब्दे युष्मच्छब्दाद् गौरवमस्ति वा न वेति निर्णेतुं नोपकरोति यतो युष्मच्छब्दस्य प्रायेण संबोधनं नास्ति। अर्थविवेचने एते प्रयोगाः परिशीलनीयाः।

राजा विदूषकं प्रति – स भवान् प्रत्यादेशसमये मत्समीपगतो नासीत्। किन्तु पूर्वमपि न त्वया कदाचित् संकीर्तितं तत्रभवत्या नामादिकं कच्चिदहमिव विस्मृतवांस्त्वमपि। शाकुं.६.

इन्द्रो नलं प्रति – तत्तयैव फलसत्वरया त्वं (५,७५)
कुर्महे भवति कार्यनिवेदम् (५,७७) नैषधम्।

हंसो नलं प्रति –

**धिगस्तु तृष्णातरलं भवन्मनः**
**समीक्ष्य पक्षान्मम हेमजन्मनः।**
**तवार्णवस्येव तुषारशीकरै-**
**र्भवेदमीभिः कमलोदयः कियान्॥** (१,१३०) नैषधम्।

घटोत्कचं प्रति भीमः – यदि ते शक्तिरस्ति बलात्कारेण मां नय। ... मर्षयतु भवान्। मध्यमव्यायोगः।

वसिष्ठो रामं प्रति –

**प्रसन्नस्ते पिता राम यौवराज्यमवाप्स्यसि।**
**उपवासं भवानद्य करोतु सह सीतया॥** रामा. अयो ५.८ (५.९)

शिष्यः अगस्त्यं प्रति –

**द्रष्टुं भवन्तमायातौ शुश्रूषार्थमरिंदमौ।**
**यदत्रानन्तरं तत्त्वमाज्ञापयितुमर्हसि॥** अर. ११.८. (१२.८)

हनुमान् सुग्रीवं प्रति –

तद् भवान् वृत्तसंपन्नः। कि. २८.१२(२९.१२)। तस्य त्वं कुरु वै कार्यम्। कि. २८.१७ (२९.१८)।

एवं खलु त्वद्भवच्छब्दौ तुल्यार्थौ परस्परं पार्श्वतः प्रयुक्तौ साहित्ये।

अपि भवच्छब्दो गौरवसूचकः?

ऋचीको भार्यां सत्यवतीं प्रति– एष चरुर्भवत्या अयमपरश्चरुस्त्वन्मात्रा सम्यगुपयोज्यः (विष्णुपु गीताप्रेस् ४.७.१९)। आह चैनामतिपापे किमिदमकार्यं भवत्या कृतम् अतिरौद्रं ते वपुर्लक्ष्यते। (२५)

पुत्रीं प्रति भवतीशब्दप्रयोगः। आयातु यातु भवती तपतीह चास्तामित्थं सदा निगदिताजनि सा पितृभ्याम्। पूर्वभारतचम्पूः। मानवेदः। ८.४१

गुरुः शिष्यं प्रति। महाभा. १.३.२९(१.३.३१)

भृत्यं स्वामी वदति – भवान् वस्त्रं क्षालयेत् (३–३–१६१, सि. कौ २२०८ बा. म.)

मृच्छकटिके (६) चन्दनकवीरकयोः कलहसन्निवेशे

चन्द–अथवा न भणामि। वीरकः – ननु (भवान्) भणतु भणतु। ... वीरकः – को भणतु। चन्द – (भवान्) भणतु भणतु।

भवच्छब्दे गौरवसूचना न विद्यते त्वच्छब्दवत् साधारणशब्द एवायमिति एषूदाहरणेषु स्पष्टं भवति।

अपि त्वच्छब्दो निरादरं सूचयति?

तत्र प्रथममुदाहार्यं नमस्ते इति सुप्रसिद्धं गौरवप्रदर्शनं वाक्यम्। नमो भवते इति न कोऽपि वदति।

देवकुलिको भरतं प्रति – इमां दशरथस्य त्वं प्रतिमां किं न पृच्छसे। प्रतिमा.३.९

त्वं राजा, ख्यातस्त्वं, अर्थानामीशिषे त्वं। भर्तृहरिः, वैराग्य। मारीचः राजानं प्रति – तव भवतु बिडौजाः, त्वमपि। शाकुन्तलम्, ७.

दुर्योधनो द्रोणं प्रति –

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम।**
**नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते।।**
**भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः।**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च।।** (गीता.१.७,८)

विश्वामित्रो दशरथं प्रति –

अहं ते प्रतिजानामि हतौ तौ विद्धि राक्षसौ। रामा. बा. १८.१३ (१९.१४)।

रामो विश्वामित्रं प्रति –

तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः। २५.५(२६.५)

सर्वं मे शंस भगवन्। २७.१८ (२८.२०)

रामलक्ष्मणौ विश्वामित्रं प्रति –

धर्मयुक्तमिदं ब्रह्मन् कथितं परमं त्वया। ३५.२ (३६.२)

हनुमान् स्वयंप्रभां प्रति – पप्रच्छ का त्वं। कि.४९.३२ (५०.४१)

कठोपनिषदि मृत्युनाचिकेतसोः सम्भाषणम् –

**तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽ**
**नश्नन् ब्रह्मन्नतिथिर्नमस्यः।**
**नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु**
**तस्मात् प्रति त्रीन् वरान् वृणीष्व।।** (१.९)

शान्तसंकल्पः सुमना यथा स्याद्
वीतमन्युर्गौतमो माभि मृत्यो।
त्वत्प्रसृष्टं माभिवदेत् प्रतीत
एतत् त्रयाणां प्रथमं वरं वृणे॥ (१०)

यथा पुरस्तात् भविता प्रतीत
औद्दालकिरारुणिर्मत्प्रसृष्टः।
सुखं रात्रीः शयिता वीतमन्यु -
स्त्वां ददृशिवान् मृत्युमुखात् प्रमुक्तम्॥ (११)

स्वर्गे लोके न भयं किञ्चनास्ति
न तत्र त्वं न जरया बिभेति।
उभे तीर्त्वाशनायापिपासे
शोकातिगो मोदते स्वर्गलोके॥ (१२)

बृहदारण्यकोपनिषदि जनको याज्ञवल्क्यं प्रति। -
सोऽहं भगवते सहस्रं ददामि अत ऊर्ध्वं विमोक्षायैव ब्रूहीति। (४-३-३३)

राजा गौतमं प्रति - स होवाच, तथा नस्त्वं गौतम मापराधास्तव च पितामहा यथा, इयं विद्येतः पूर्वं न कस्मिंश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति। (६-२-८)

श्रुतिवाङ्मयादारभ्य काव्यवाङ्मयं यावत् त्वद्भवच्छब्दौ समानार्थत्वेन प्रयुक्तौ एकतरस्मिन् गौरवस्पर्शः अन्यतरस्मिन्नगौरवस्पर्शश्च नास्तीति एभिरुदाहरणैः सुविदितं भवति। यथा आङ्ग्लभाषायां you इति पदं संमुखीनं प्रति प्रयुज्यते you are a learned man

इति वा you are a fool इति वा तथैव त्वद्भवच्छब्दौ द्वावपि वाङ्मये लक्ष्येते। प्राचीनसाहित्ये त्वच्छब्दो भूयशः प्रयुक्तो भवच्छब्दस्तत्र तत्र च। अद्यत्वे अत्रभवत्तत्रभवत्शब्दयोरेकदेशत्वेन भवच्छब्दो गौरवसूचक इति हिन्दीभाषायाः तुम् शब्दस्य सादृश्येन त्वंशब्दो मनाङ् निरादरसूचक इति च भ्रमो जायते।

५. ण्वुल्तृचौ वर्तमानकाले एव प्रयोज्यौ किम्?

ण्वुल्तृचौ (३-१-१३३) इति सूत्रस्य भाष्यमनुसृत्य एतौ वर्तमानकाले एव प्रयोज्यौ। अत्रेमान्युदाहरणानि द्रष्टव्यानि तौ त्रिकालेषु प्रयुक्ताविति निश्चेतुम्।

प्रणयादेव सक्रुद्धा भर्तारमिदमब्रवीत्। रामा. अयो. २४.१(२७.१)

समेत्य राजकर्तारः सभामीयुर्द्विजातयः।६१.१ (६७.२)

**अथ भूमिप्रदेशज्ञाः सूत्रकर्मविशारदाः।**
**स्वकर्माभिरताः शूराः खनका यन्त्रकास्तथा।।**
**कर्मान्तिकाः स्थपतयः पुरुषा यन्त्रकोविदाः।**
**तथा वर्धकयश्चैव मार्गिणो वृक्षतक्षकाः।।**
**कूपकाराः सुधाकारा वंशकर्मकृतस्तथा।**
**समर्था ये च द्रष्टारः पुरतस्ते प्रतस्थिरे।।**

(रामायणम्, अयो, ७४-१,२,३. (८०-१,२,३)

अत्र कर्तारः द्रष्टारः इत्यत्र तृन् (३-२-१३५) मनागेव लगति। सर्वाण्येतान्युदाहरणानि स्थालीपुलाकन्यायेन मया प्रदर्शितानि। यथा वाङ्मये दृश्यन्ते तथा एते शब्दा मया एतस्मिन् ग्रन्थे उपयुक्ता इति निवेदयामि।

